किमिहाचरितं मया विधे
   सुमहत्पातकमाधिकारणम् ।
अतिदुस्सहवेदनोदया
   सततं येन दशाऽनुभूयते ॥ ११८ ॥

दयितेन सती वियोजिता
   नियतं कापि मया भवान्तरे ।
मनुजाधिपतिः स मां प्रिया-
   मनवद्यां कथमन्यथा त्यजेत् ॥ ११९ ॥

अबलामपकल्मषामिह
   त्यजतो मामृजुभाववञ्चिताम् ।
क्व गता तव साधुशीलता
   करुणा वा रघुनाथ सांप्रतम् ॥ १२० ॥

त्यज काननसीम्नि जानकी-
   मिति वाणी वदनात्तवोद्गता ।
नियतं मम भाग्यदोषतो
   विषधारा विधुमण्डलादिव ॥ १२१ ॥

रघुनाथकुटुम्बिनीति या[1]
   बहुमानैकपदं तपोभृताम् ।
अभवं चिरमद्य सैव हा
   कथमन्या निवसामि कानने ॥ १२२ ॥

---

१. रघुराज

व्यसृजद्भवतीं महीपतिः
स हि कस्मात्सहधर्मचारिणीम् ।
इति पृच्छति तापसीजने
प्रतिदेयं किमिहोत्तरं मया ॥ १२३ ॥

दुरितानुभवाय केवलं
विधिरेनां मम निर्ममे तनुम् ।
अनया न किमन्यदुःसहे-
ष्वनुभूतं न च दृश्यतेऽवधिः ॥ १२४ ॥

पतिता सुरनिम्नगाजले
परिहास्यामि हतं नु जीवितम् ।
इदमप्युचितं न सांप्रतं
जठरे यन्मम वंशकन्दली ॥ १२५ ॥

तरुणाम्बुदकोमलच्छवे
चरणाम्भोरुहमेव ते पते ।
शरणं मम यत्र कुत्र वा
जनुषि स्यात् करुणापयोनिधे ॥ १२६ ॥

मरणं वरमद्य मे तनो-
र्भरणेनास्ति किमेतदेव मे ।

---

१. इदमप्यमितं न सांप्रतं जठरे यत्कुलकन्दलिश्रितौ
२. १२६–१२७ श्लोकौ न स्तः

स्मरणं जनुर...मस्ति चे-
  द्रमणः स्यादरुणान्वयः प्रभुः ॥ १२७ ॥
अवलोक्य सुदुःसहव्यथां
  विलपन्तीमिति जानकीं शुचा ।
अरुदन्नपहाय धीरतां
  स्रुतकारुण्यमरण्यदेवताः ॥ १२८ ॥
अथ तत्र विलोक्य जानकीं
  मुनिबाला वनदेवतोपमाम् ।
तरसा गुरवे न्यवेदयन्
  करुणात्मा स च तामुपासदत् ॥ १२९ ॥
अवलोक्य मुनिं पुरःस्थितं
  नवकारुण्यतरङ्गितेक्षणम् ।
रुदती परितापविह्वला
  पदयोस्तस्य ननाम जानकी ॥ १३० ॥
चतुरन्तमहीभरक्षमं
  पतितुल्यं तनयं त्वमाप्नुहि ।
इति तामनुगृह्य सान्त्वय-
  न्मुदितात्मा मुनिरेवमब्रवीत् ॥ १३१ ॥
अयि मैथिलि रामवल्लभे
  विदिता त्वं पतिदेवता मया ।

---

१. (जनुरन्यदस्ति चेत्) ?

अपवादभयेन राघवो
भवतीमत्यजदुत्तमाङ्गने[1] ॥ १३२ ॥
तपसा विदितं मयाऽखिलं
तदिदं चेतसि मान्यथा कृथाः ।
न हि कीर्तिविपर्ययं नृपा
विषहन्ते मनुवंशसंभवाः ॥ १३३ ॥
निवसात्र तपोवने सुखं
निबिडानोकहवारितातपे ।
विषयान्तरसंस्थितं पितु-
र्नगरं विद्धि मदीयमाश्रमम् ॥ १३४ ॥
जननीभिरिवार्द्रमानसै-
र्मुनिदारैरिह साधु सङ्गता ।
अनिशं मधुरैः कथान्तरै-
रनघे शोकमपाकरिष्यसि ॥ १३५ ॥
कुसुमाहरणादि तन्वतीं
कुलकन्याभिरिहाश्रमान्तिके ।
बलिकर्मसु नित्यसादरां
बलवन्नाभिभवेन्मनोरुजा ॥ १३६ ॥
इति तत्तदुदीर्य जानकीं
मृदु नीत्वा निजमाश्रमं मुनिः ।

---

१. उत्तमां वने

अनुनीतिविशारदो मुदा
मुनिदारानिति वाचमूचिवान् ॥ १३७ ॥

दुहिता जनकस्य भूपतेः
सुहृदः पंक्तिरथस्य मे स्नुषा ।
दयिता रघुपुङ्गवस्य या
बहु सीतेति मयाऽभिनन्द्यते ॥ १३८ ॥

इयमेव हि सा यशस्विनी
मृदुलाङ्गी पतिदेवता वधूः ।
नवदौहृदखेदिनी सदा
परिपाल्या भवतीभिरादरात् ॥ १३९ ॥

वरुणाङ्गभुवा महर्षिणा
करुणातुन्दिलचेतसेति सा ।
अवनीतनया समर्पिता
मुनिपत्नीष्ववसत्तदाश्रमे ॥ १४० ॥

आतन्वाना वसतिमुटजे तत्र वल्मीकयोने-
राकम्राङ्गं मनसि दयितं रामचन्द्रं स्मरन्ती ।
आधिक्षामा जठरनिहितस्याशिषः[1] कान्तबीज-
स्याशासाना समयमनयत्सा धरित्रीतनूजा १४१

1. स्यांशष

सौमित्रिस्तु विलङ्घ्य दिव्यतटिनीं मार्गे सुमन्त्राननाः
दादिष्टं हररोषजेन मुनिना वृत्तान्तमाकर्णयन् ।
किञ्चिन्न्यञ्चितशोकवृत्ति नगरीमभ्येत्य दृष्ट्वाग्रजं
नत्वा चापि निवेद्य वृत्तमखिलं भेजे निजं मन्दिरम् ॥

इत्थं घोरं निघातं मनसि सहचरीत्यागसंदंशिकाग्रे-
णारादुद्धृत्य शल्यं दशवदनरिपुर्दुर्यशोनामधेयम् ।
पश्चात्तापाकुलात्माऽप्यनितरसुलभं सत्वमालम्ब्य धीमा-
नच्छिन्नाज्ञाप्रचारः समशिषदवनीचक्रमेकातपत्रम् ॥
॥ १४३ ॥

इति [1]उत्तररामायणचरिते
द्वितीयः सर्गः ॥

१. उत्तरराघवीये

# तृतीयः सर्गः ।

इति कौलीनसंत्रस्तः सतीं संत्यज्य जानकीम् ।
तामेव पश्यन्मनसा रामः कालमहापयत् ॥ १ ॥

रमयामास तं वीरं रघुवंशधुरंधरम् ।
समुद्रवसना सम्यक्[1]सपत्नरहिता मही ॥ २ ॥

तं कदाचन माणिक्यसभामध्यनिवेशिते ।
सगौरवं समासीनं [2]मृगेन्द्रमणिविष्टरे ॥ ३ ॥

[3]पुरोविनीतभूपालकिरीटमणिभास्वताम् ।
[4]कराम्बुजपरीरम्भकरालितपदाम्बुजम् ॥ ४ ॥

वारनारीकराधूतचामरालोलकुन्तलम् ।
चारुकुङ्कुमपङ्काङ्कहारभासुरवक्षसम् ॥ ५ ॥

सहजैः [5]सहजौदार्यसहितैर्भरतादिभिः ।
सुमन्त्राद्यैस्तथामात्यैः समन्तात्समुपासितम् ॥ ६ ॥

द्रष्टुमभ्याययुः क्लिष्टा लवणेन दुरात्मना ।
यमिनो मुनयः केचिद्यमुनातीरवासिनः ॥ ७ ॥

१. सपत्नीरहिता  २. करीन्द्ररिपुविष्टरे  ३. पुरोविनतभूपाल
४. कराञ्चलपरीरम्भ  ५. सहजौदार्यैः सहितं

अथ तानागतान्विप्रानर्घ्यपाद्यादिभिर्नृपः ।
अर्चयित्वा यथान्यायमासनेषु न्यवेशयत् ॥ ८ ॥

आगमार्थविदा सम्यगागमस्याथ कारणम् ।
अनुयुक्ता नरेन्द्रेण मुनयोऽस्मै[1] व्यजिज्ञपन् ॥ ९ ॥

निःशेषसाधुसंत्राणविश्राणनमहाव्रत ।
आकर्णय वचोऽस्माकमाकुलानां महीपते ॥ १० ॥

अधुना जृम्भते कश्चिन्मधुपुत्रो महाबलः ।
श्रवणादेव भयदो लवणो नाम राक्षसः ॥ ११ ॥

अधरीकृत्य निखिलान्मधुरामावसन्पुरीम् ।
विनाशयति लोकांस्त्रीन्विशेषेण स तापसान् ॥ १२ ॥

व्यादाय वदनं दोर्भ्यामादाय रुधिरप्रियः ।
निक्षिप्य तस्मिन्विप्रौघमिक्षुखादं स खादति ॥ १३ ॥

सन्ध्योपासनकर्मापि संत्रासात्कुर्महे रहः ।
दूरतः शेरतां क्वापि ज्योतिष्टोमादिकाः क्रियाः ॥१४॥

शूलमुद्यम्य चरतस्तस्य दिव्यं दुरात्मनः ।
न संमुखीनतां याति सवज्रोऽपि च वासवः ॥ १५ ॥

अविंशतिभुजः सोऽयमलङ्कानगराश्रयः ।
अपङ्क्तिवदनः कष्टमपरो हन्त रावणः ॥ १६ ॥

१. मुनयस्तं व्यजिज्ञपन्

बाध्यमाना मुहुस्तेन साध्वसार्ता वयं विभो ।
आश्रयं दीनलोकानामाश्रितास्त्वां दयानिधे । १७ ॥

त्वं नः पाहि महाराज तं निहत्य निशाचरम् ।
विधेह्युदयनीयेष्टिं सर्वरक्षोवधक्रतोः ॥ १८ ॥

इति वाचं मुनीन्द्राणामाकर्ण्य रघुपुङ्गवः ।
अब्रवीदुल्बणं तेषां विषादं शमयन् गिरा ॥ १९ ॥

घातयिष्यामि तं पापं यातुधानं द्विजोत्तमाः ।
भयमेतदयुक्तं वो मयि तिष्ठति सानुजे ॥ २० ॥

इत्युदीर्य मुनीन् भूयः शत्रुघ्नं प्राह सोदरः ।
मन्दस्मितसुधास्यन्दसुन्दराननपङ्कजः ॥ २१ ॥

लक्ष्मणः कृतकर्माऽयं शक्रजिन्निग्रहादिभिः ।
भरतोऽपि धराभारभरणाद्भुवि संमतः ॥ २२ ॥

अतस्त्वयि नरव्याघ्र विधिस्त्वेष क्रमागतः ।
तं निहत्य दुरात्मानमन्वर्थय निजाभिधाम् ॥२३॥

अधुनैव पुरादस्मादमीभिः सह तापसैः ।
निर्गन्तव्यं त्वया भद्र निःसंदिग्धं ममाज्ञया ॥ २४ ॥

शृण्वतो भरतभ्रातुर्गिरमित्यग्रजन्मनः ।
वदनं विनतं जज्ञे हृदयं त्वधिकोन्नतम् ॥ २५ ॥

सभासदश्च तद्वाक्यं साधु साध्वित्यपूजयन् ।
यातुकामः स शत्रुघ्नः प्रीतात्मा प्रणनाम च ॥ २६ ॥

आलिङ्ग्यावरजं गाढमाचुम्बन्मूर्ध्नि राघवः ।
उवाच भूयो वचनमुद्गूढप्रेमया धिया ॥ २७ ॥

स्वस्ति शत्रुघ्न ते भूयाद्गच्छ साकं तपोधनैः ।
जहि तं लवणं पापमहितं ब्रह्मवादिनाम् ॥ २८ ॥

सन्ततं सावधानत्वं रन्ध्रप्रहृतिरेव च ।
विशेषात्सिद्धिदं विद्धि विजिगीषोरिदं स्वयम् ॥२९॥

यातु वैवस्वतपुरं यातुधानः स दुर्मतिः ।
तवास्तु सा पुरी दिव्या मधुरा मधुराकृतेः ॥३०॥

जनतां नगरे तत्र विनिवेश्य सुखं वसन् ।
परिपाहि प्रजाः सौम्य स्मरास्मानपि सोदरान् ॥३१॥

कथयन्निति तं रामो विधास्यन्मधुरापतिम् ।
अभ्यषिञ्चन्महासत्त्वमभ्यमित्रीणमानसम् ॥३२॥

आनन्दाश्रुजलैः पूर्वमभिषिक्तस्य मूर्धनि ।
[1]तस्य तीर्थाम्बु पतितमवाप पुनरुक्तताम् ॥ ३३ ॥

विशिखं च ददौ तस्मै निशितं पिशितप्रियम् ।
अनेन लवणं संख्ये हन्तासीति वदन् करे ॥३४॥

१. तस्य तीर्थजलासेक. प्रपेदे पुनरुक्तताम्

शरेण शुशुभे तेन शत्रुघ्नः शत्रुघातिना ।
संध्यायां सूर्यदत्तेन सप्तार्चिरिव तेजसा ॥ ३५ ॥

मुनीनपि[1] पुनः प्राह मधुरं मधुराक्षरम् ।
मनुवंशारणिप्रोद्यद्रनुवंशहुताशनः ॥ ३६ ॥

हन्तायं लवणस्यान्तःसंतापं त्यजताखिलम् ।
गच्छत स्वाश्रमं विप्राः स्वच्छचित्ताः सहामुना ॥ ३७

व्याजेतरगिराश्वास्य पूजाविधिविशेषवित् ।
राजा रघुकुलश्रेष्ठो यापयामास तापसान् ॥ ३८ ॥

अनेन सह निर्यान्तु कुमारेण तपोधनाः ।
हन्तायं लवणस्येति मुनीनप्याह राघवः ॥३९॥

अनुगृह्य च ते गन्तुमुदातिष्ठन्महर्षयः ।
अव्याक्षेपेण मन्वानाः कार्यसिद्धिं करस्थिताम् ॥

शत्रुघ्नोऽपि परिक्रम्य भ्रातरं भ्रातरावपि ।
जननीरप्यनुज्ञाप्य मुनिभिः सह निर्ययौ ॥ ४१ ॥

आस्थितः शुशुभे वीरः कार्तस्वरमयं रथम् ।
समण्डलाग्रलक्ष्यश्रीः सुमेरुमिव भास्करः ॥ ४२ ॥

तमन्वगान्नरव्याघ्रं वाहिनी रामशासनात् ।
उद्धृतानेकनालीका[2] स्वर्धुनीव भगीरथम् ॥ ४३ ॥

१. ३६-३७-३८ श्लोका न सन्ति

२. अन्विता बहुनालीकैर्जह्नुजेव भगीरथम्

निवेदयन्तः पदवीमग्रे जग्मुर्महर्षयः ।
महाप्रभामाङ्गलिका मणिदीपाङ्कुरा इव ॥ ४४ ॥

मुनिजुष्टपुरोभागं कनकस्यन्दनास्थितम् ।
प्रणेमुस्तं प्रजा मार्गे प्रभाकरमिवापरम् ॥ ४५ ॥

तीर्त्वा चन्द्रकलामौलिमौलिमालां तरङ्गिणीम् ।
व्रजन्विलोकयामास वनं वल्मीकजन्मनः ॥ ४६ ॥

अभजच्च रवेर्बिम्बमतिसौम्यतरं तदा ।
तप्तहाटकसंकाशमस्तशैलकिरीटताम् ॥ ४७ ॥

समवस्थाप्य स बहिः सैनिकान्मुनिभिः समम् ।
विनीतवेषः शनकैर्मुनेराश्रममासदत् ॥ ४८ ॥

मानयामास तमृषिर्माननीयं महाकविः ।
सूर्योढमतिथिं प्राप्तं सूर्यवंशाङ्कुरं नृपम् ॥ ४९ ॥

तत्रैव तां निशां निन्ये शत्रुघ्नस्तेन सत्कृतः ।
संकल्पोपनतोर्वीशसपर्यायोग्यसंपदा ॥ ५० ॥

असूत सीता यामिन्यां तस्यामेव कुमारकौ ।
सवितुः कुलसंपत्त्यै संज्ञादेवाविवाश्विनौ ॥ ५१ ॥

विशोधिताङ्गौ रक्षार्थं कुशेन च लवेन च ।
स्वयं कुशलवौ नाम्ना तौ चकार महामुनिः ॥५२॥

श्रुत्वा संतानसंभूतिमग्रजस्यानुभूतवान् ।
शत्रुघ्नः काममपि दशां मध्यस्थां प्रीतिशोकयोः ॥ ५३ ॥

अथालक्ष्यत संतप्तकाञ्चनस्यन्दसुन्दरम् ।
संक्रन्दनाशातरुणीकुण्डलं रविमण्डलम् ॥ ५४ ॥

हुताग्निहोत्रमासीनं हुताशनमिवापरम् ।
प्रणम्यापृच्छ्य तमृषिं प्रतस्थे राघवानुजः ॥ ५५ ॥

कथयाश्चक्रुऋषयः पथि रामानुजन्मने ।
शूरतां यातुधानस्य शूलिशूलसमुद्भवाम् ॥ ५६ ॥

विशूलः स विजेतव्यः सशूलो न कदाचन ।
इति चाकथयन् कर्णे भूयो भूयो भयाकुलाः ॥ ५७ ॥

प्रतिगृह्य वचस्तेषां प्रहसन्निव राघवः ।
अब्रवीद्धीरमव्यग्रो मा भैष्टेति मिताक्षरम् ॥ ५८ ॥

गच्छतस्तस्य सानन्दं पश्यतो विविधाः स्थलीः ।
गव्यूतिमात्रमासन्नं क्रव्यादस्याभवद्वनम् ॥ ५९ ॥

निवेश्य महतीं सेनां च्यवनस्याश्रमे मुनेः ।
सत्रा मुनिजनैरेष तत्रैकामनयन्निशाम् ॥ ६० ॥

प्रभाते स्वयमुत्तीर्य प्रभाकरसुतां नदीम् ।
चापमात्रसखो वीरः प्रतस्थे मधुरावनम् ॥ ६१ ॥

१. प्राप नैर्ऋतमन्दिरम्

स कालः किल निर्दिष्टो मुनिभिस्तत्त्वदर्शिभिः ।
विशूलस्य रिपोस्तस्य विपिने मृगयाविधेः ॥ ६२ ॥

रुद्रदत्तं पुरे न्यस्य रौद्रं शूलं स राक्षसः ।
निशान्त्ययामे विपिनचारी चरति तापसान् ॥ ६३ ॥

अन्यांश्चारण्यकान् जन्तून् सिंहव्याघ्रद्विपादिकान् ।
हत्वा दोर्भ्यां गृहीत्वा च प्रातः प्रतिनिवर्तते ॥ ६४ ॥

१. ६२-६६ श्लोकानां स्थाने इमे श्लोकाः पठिताः—

तच्च भक्षोपकारार्थं तत्प्रवेशात्पुरःसरः ।
विशूलं निर्गतं यातु· सतां दैवं हि दक्षिणम् ॥
लब्ध्वान्तरे स शत्रुघ्नस्तमेव प्रतिपालयन् ।
आवृत्य मधुराद्वारमतिष्ठद्युद्धलालस. ॥
ददर्श च ततो दूरादागच्छन्तं निशाचरम् ।
पादचारिणमायान्तं महान्तमिव पर्वतम् ॥
प्रभाजालं विमुञ्चन्तं प्रभिन्नाञ्जनसोदरम् ।
उद्यमन्तमिवामान्तं तमस्तोमं हृदन्तरे ॥
ऊर्ध्वगातिखराताम्रमूर्धजोल्लिखिताम्बरम् ।
रक्तकर्दमसंक्लृप्तचित्रचित्रकभूषितम् ॥
दीप्तपावकसंकाशनेत्रयुग्मभयंकरम् ।
अर्धजग्धलुठद्धोरसत्वपूर्णाननोदरम् ॥
सृक्कमार्गगलत्सान्द्ररक्तचर्चितकूर्चकम् ।
करिप्रौढमहाचर्मपरिष्कारिकटीतटम् ॥
करद्वयपरिभ्राजत्तरक्षुशवसंचयम् ।
मुनिमण्डलमुण्डौघमणिकाञ्चिभयानकम् ॥

प्रविशन्नेव विपिनं लवणं घोरदर्शनम् ।
ददर्श रन्ध्रदृग्दूराद्विनिर्यान्तमिवान्तकम् ॥ ६५ ॥

दंष्ट्राग्रप्रोतमहिषं दोस्तलग्रस्तहस्तिनम् ।
रुधिरार्द्रवसाविस्रं धातुताम्रमिवाचलम् ॥ ६६ ॥

तालाभपादविन्यासविकम्पितमहीतलम् ।
घोरतारतराराव पूरिताशेषदिङ्मुखम् ॥ ६७ ॥

रौद्रबीभत्सयोर्योगं मूर्तिमन्तमिवागतम् ।
आपदामिव भर्तारमन्तकस्येव किङ्करम् ॥ ६८ ॥

दृष्ट्वा तं घोरवपुषं हृष्टोऽभूल्लक्ष्मणानुजः ।
राक्षसैः सह संघर्षो रघूणां हि महोत्सवः ॥ ६९ ॥

अद्राक्षीत्सोऽथ शत्रुघ्नमुत्सुको रजनीचरः ।
उल्लसत्काण्डकोदण्डमण्डितोच्चण्डदोर्द्वयम् ॥ ७० ॥

पश्यन्नुग्रतरं दृग्भ्यामुच्चैः कोऽसीति चाब्रवीत् ।
उत्कटाटोपनिर्घातघर्घरध्वानया गिरा ॥ ७१ ॥

आकृतिं च स्वरं चैव निशाम्य च निशम्य च ।
तस्य पापस्य संक्रुद्धः शत्रुघ्नो वाक्यमब्रवीत् ॥ ७२ ॥

श्रोत्रयोस्तव पन्थानं प्राप्तवान् किं न राघवः ।
निशाचरतमोराशिनिराकरणभास्करः ॥ ७३ ॥

१. विशङ्कटपदन्यास.

तस्य मामनुजं विद्धि शत्रुघ्नं नाम दुर्मते ।
निग्रहाय तव प्राप्तमग्रजस्य ममाज्ञया ॥ ७४ ॥

यस्त्वं करोषि संतापं नित्यं नित्यं तपोभृताम् ।
कर्मणस्तस्य पापात्मन् फलमद्यानुभोक्ष्यसे ॥ ७५ ॥

इक्ष्वाकुकुलजातानामक्षुद्राणां महीभुजाम् ।
रक्षसां दुश्चरित्राणि न क्षमन्ते शिलीमुखाः ॥ ७६ ॥

क्षणदाचर मन्दात्मन् क्षणं तिष्ठ ममाग्रतः ।
प्रातराशाय दास्ये त्वां प्रेतराजाय सांप्रतम् ॥ ७७ ॥

इति शत्रुघ्नगदितां गिरं प्रागल्भ्यशालिनीम् ।
निशम्य रोषताम्राक्षो जहासोच्चैर्निशाचरः ॥ ७८ ॥

विहस्य सुचिरं भूयो विनदन्भैरवस्वनम् ।
अब्रवीदुल्बणक्रोधं वचनं पिशिताशनः ॥ ७९ ॥

दिष्ट्यासीदसि धृष्टात्मन् दृष्टयोः सरणिमद्य मे ।
उत्कण्ठामपनेष्यामि त्वत्कण्ठाकृन्तनोद्भवाम् ॥ ८० ॥

मम भ्राता दशग्रीवस्तव भ्रात्रा निषूदितः ।
भ्रातृहत्यानिकारं तं तेनैव प्रमृजाम्यहम् ॥ ८१ ॥

प्रतीपं[1] तव मिथ्यैतत्कत्थनं मर्त्यकीटक ।
वर्तसे त्वमिदानीं[2] मे तीक्ष्णदंष्ट्राद्वयान्तरे ॥ ८२ ॥

१. निस्त्रपं २. त्वमिदानी यन्मृत्युदंष्ट्रा.

जक्षणादस्य पुरतो भक्ष्यराशेः करोम्यहम् ।
स्निग्धेन तव मांसेन सद्यः प्राणाहुतिक्रियाम् ॥८३॥

वदन्निति भिया गूढं किञ्चिदालिङ्गितान्तरः ।
आदातुं शूलमतुलमन्तर्गन्तुं प्रचक्रमे ॥ ८४ ॥

अविशङ्कं पुरीमेनं प्रविशन्तं स्वदृक्पथात् ।
रन्ध्रज्ञो रामसहजो रुन्द्धे स्म रजनीचरम् ॥ ८५ ॥

निष्पत्राकर्तुकामस्तं[1] निष्पत्रीकृतपादपम् ।
करस्थमेव चिच्छेद काकुत्स्थकुलनन्दनः ॥ ८६ ॥

शिलाजालैस्ततः कोपात् पलादकुलपांसनः ।
प्रहरन्नभ्ययात् तूर्णमहितं विहितोद्यमः ॥ ८७ ॥

शत्रुघ्नशरसंपातघोरमारुतरंहसा ।
पलालप्रायतां याताः पलादप्रेरिताः शिलाः ॥ ८८ ॥

कृतप्रतिकृतैरेवं युयुधाते महाबलौ ।
परस्परवधापेक्षापराकृतपरिश्रमौ ॥ ८९ ॥

तदा संपूरितं व्योम तदाहवदिदृक्षुभिः ।
नारदाद्यैः प्रतिच्छन्नैर्नीरदप्रतिसीरया ॥ ९० ॥

१. निष्पिष्य हस्तौ रोषेण निष्पपात निशाचरः ।
निष्पत्रा … … … … पादपम् ।
पुरस्तात्तत्प्रहारस्य क्षुरप्रैः पादपं रिपोः ।
करस्थ … … … …नन्दनः ॥

रामरावणसंघर्षं व्योममार्गचराः सुराः ।
असरन्ननुभूतं प्राग्विस्मयस्मेरलोचनाः ॥ ९१ ॥

जग्धुकामोऽथ शत्रुघ्नमभ्यधावन्निशाचरः ।
व्यादाय विपुलं वक्त्रं पर्वणीव फणी रविम् ॥ ९२ ॥

शत्रुघ्नोऽपि महातेजास्तद्वधे कृतनिश्चयः ।
अग्रजेनात्मनो दत्तमुग्रं सायकमाददे ॥ ९३ ॥

संधाय चापे तं बाणमिन्धानज्वलनोपमम् ।
मुमोचाकर्णमाकृष्य हतोऽसीत्युच्चकैर्वदन् ॥ ९४ ॥

बाणः स राघवोत्सृष्टः प्रीणयन्नखिलामरान् ।
प्राणं तस्य निराचक्रे त्राणं चक्रे च यज्वनाम् ॥९५॥

महाशठश्च न्यपतन्महाशरविदारितः ।
सुमनोजनमुक्ता च सुमनोविततिः क्षितौ ॥ ९६ ॥

यातुधाना हते नाथे जातखेदाः परे पुरात् ।
अपत्याद्यैः सह त्रासादवद्धारं[1] प्रदुद्रुवुः ॥ ९७ ॥

अथ तत्राभिसंजग्मुर्मुनयश्च्यवनादयः ।
साधु वत्सेति शंसन्तः प्रीतिविस्तारितेक्षणाः ॥ ९८ ॥

सुरवृष्टसुमामोदसुभगे तस्य मूर्धनि ।
निधाय पाणिकमलं मुदा युयुजुराशिषः ॥ ९९ ॥

---

१. दपद्वारा प्रदुद्रुवुः

अस्तुवन्नपि शत्रुघ्नमस्तशङ्का महर्षयः ।
अत्यन्तामोदविसराद्र्धलुप्ताक्षरैः पदैः ॥ १०० ॥
स्तुतिभिर्मुनिमुख्यानां स तु लज्जां प्रपेदिवान् ।
भ्रातरौ तावनुस्मृत्य रावणेन्द्राजिदन्तकौ ॥ १०१ ॥
विदितस्वामिविजया मुदिता चतुरङ्गिणी ।
भरतभ्रातरं भेजे तरसा तं वरूथिनी ॥ १०२ ॥
विसृज्य विनयानम्रो विसृत्वरमुदो मुनीन् ।
अविशत्सेनया साकमविशङ्कः पुरीं रिपोः ॥ १०३ ॥
कारुभिः कारयित्वा तां चारुप्राकारतोरणाम् ।
यथार्थसंज्ञामकरोन्मधुरामथ राघवः ॥ १०४ ॥
चातुर्वर्ण्यजनं तस्यां साधु संस्थाप्य नीतिमान् ।
पालयामास धर्मेण राज्यं प्राज्यपराक्रमः ॥ १०५ ॥
ममार्ज मधुरा पीडां तस्यायोध्यावियोगजाम् ।
सरयूविरहोत्पन्नां सवितुस्तनया यथा ॥ १०६ ॥
आसीनो मणिसौधदन्तवलभीवातायनान्ते मुदा
पर्यङ्के कलहंसतूलशयने कान्तासमेतो युवा ।
केलीलोलमरालहारिपुलिनामालोकयन्नन्तिके
कालिन्दीमघहारिणीमनुदिनं रेमे स रामानुजः ॥

॥ इति उत्तररामचरितकाव्ये तृतीयः सर्गः ॥

१. उत्तरराघवीये काव्ये

# चतुर्थः सर्गः ।

इत्थं प्रतिष्ठाप्य मधोः पुरे तं
शत्रुघ्नमुद्दामभुजापदानम् ।
अध्यास्त पुण्यामधिपो रघूणा-
मुद्दामयोध्यां कुलराजधानीम् ॥ १ ॥

तक्षाभिधः पुष्कलसंज्ञकश्चा-
प्युभावभूतां भरतस्य पुत्रौ ।
तथैव जातावपि लक्ष्मणस्य
सुतावुभावङ्गदचन्द्रकेतू ॥ २ ॥

उदारधाम्नो मधुरेश्वरस्य
भ्रातुः परस्याप्यभिनन्द्यशीलौ ।
सुतावभूतामथ शत्रुघाति-
सुबाहुसंज्ञौ सुमहानुभावौ ॥ ३ ॥

---

१. अधिकोऽयं श्लोकः—

शशास धर्मेण च निर्मलात्मा विशोधितापत्प्रसरां धरित्रीम् ।
समप्रविक्रान्तिविभूषणाभ्यां समं भुजाभ्यामिव सोदराभ्याम् ॥

२. सुलभापदानौ

तानात्मजानात्मसहोदराणा-
मारोपयन्नङ्कमनूनरागम् ।
आलोकयन्दुर्ललितानि चैषा-
मानन्दसिन्धौ निममज्ज रामः ॥ ४ ॥

अङ्काधिरोहप्रणयातिरेकै-
रव्यक्तवर्णैश्च वचोविशेषैः ।
अन्यानपोह्यामनपत्यतोत्था-
मार्तिं तदीयामहरन् कुमाराः ॥ ५ ॥

तत्रैकदा जानपदो द्विजन्मा
कश्चित् प्रपेदे परिखिन्नचेताः ।
आदाय बालं तनयं कराभ्यां
कालोपसृष्टं विलपन्नकाले ॥ ६ ॥

शोकातिभारेण स विह्वलात्मा
काकुत्स्थमाक्षेपगिरां विशेषैः ।
निनिन्द राज्ञस्तव कर्मदोषात्
प्राणैर्वियुक्तस्तनयो ममेति ॥ ७ ॥

निसर्गसिद्धश्चपलस्वभावो
नितान्तरूक्षोऽपि च शोकवेगः ।
वाचालमेकोऽप्यनयोः करोति
योगे तयोः किं पुनरस्ति वाच्यम् ॥ ८ ॥

---

१. द्वारि स्थितो दुःसहमन्युवेगः

भर्तुस्तदाक्षेपममृष्यमाणान्[1]
पृथ्वीसुरं तं प्रति बद्धरोषान् ।
निरुध्य पौरानधिपो रघूणां
निरस्तकोपं वचनं बभाषे ॥ ९ ॥

श्राव्यो न किंचित् परुषं द्विजन्मा
लौल्येन निन्दन्नपि मामशङ्कम् ।
क्षन्तव्यमेवास्य[2] वचो भवद्भिः
संतप्यमानस्य शुचा विशेषात् ॥ १० ॥

अमुं द्विजं प्रत्यभिषङ्गदीनं
कृपा समुन्मीलति मानसे मे ।
तं भिन्नसेतुं प्रति दण्डपाणिं
संरम्भरूक्षं तु मनो मदीयम् ॥ ११ ॥

अर्कान्ववायप्रभवेषु पूर्व-
मन्येषु धात्रीं परिपालयत्सु ।
अभूतपूर्वः समुपस्थितोऽय-
मकालमृत्युर्मयि पालनार्हे ॥ १२ ॥

तन्मामवज्ञाय ककुत्स्थवंश्यं
राज्ये मदीये विहितापचारम् ।
मृत्युं निहत्याशु शरैः शिताग्रैः
प्रत्याहरिष्ये तनयं द्विजातेः ॥ १३ ॥

१. तमाक्षेप २. तस्य

इत्थं वदन्मन्युपरिप्लुताक्ष-
मुत्तिष्ठमानः शमनं विजेतुम् ।
ससार यानं धनदस्य तच्च
सद्यः प्रपेदे सविधं तदीयम् ॥ १४ ॥

अथ प्रतिष्ठासुममेयवीर्यं
यथावदाभाष्य रघुप्रवीरम् ।
परिस्फुटार्था गगनाद्बभूव
सरस्वती काप्यशरीरबन्धा ॥ १५ ॥

मा मा महाराज कृथाः प्रकोपं
तं कर्मनिघ्नं प्रति धर्मराजम् ।
आकर्णयाकालभवस्य मृत्यो-
र्निदानमद्या[1]प्यपदानराशे ॥ १६ ॥

रौद्रं तपस्त्वद्विषये करोति
शूद्रोऽधुना शम्बुकनामधेयः ।
तत्कण्ठकाण्डे करवाललूने
सद्यः सजीवो भविता कुमारः ॥ १७ ॥

आकर्णयन्नम्बुदनादधीरा-
माकाशवाणीमिति रामचन्द्रः ।
आशामवाचीं प्रति तं विचेतु-
मारुह्य यानं तरसा प्रतस्थे ॥ १८ ॥

1. मस्याप्यवधानराशे

स मार्गमाणो गिरिकाननेषु
विमार्गगं शूद्रमुनिं मनस्वी ।
सरोवरं किञ्चिदपश्यदग्रे
सरोजगन्धाकुलषट्पदौघम् ॥ १९ ॥

ददर्श चाग्रे तपसि प्रवृत्तं
तदीयतीरे तरुशाखिकायाम् ।
[1]अधोमुखं धूमपिबं चिराय
वेतालवत्कञ्चन लम्बमानम् ॥ २० ॥

कस्त्वं किमुद्दिश्य तपः करोषि
न त्वं द्विजो वक्ति ममान्तरात्मा ।
इत्थं स पृष्टो रघुनायकेन
वृत्तं निजं निस्तुषमाचचक्षे ॥ २१ ॥

जातोऽस्मि वर्णे जगदेकपूज्ये
पादारविन्दप्रभवे मुरारेः ।
उग्रां तपस्यां प्रयतश्चरामि
स्वर्गं यियासुः सशरीर एव ॥ २२ ॥

अपक्वबुद्धे[2]रेवमस्य जात्या
तपस्विनस्तामवकर्ण्य वाणीम् ।
क्षणं बभूव क्षणदाचरारिः
कोपानुकम्पाकुलितान्तरात्मा ॥ २३ ॥

१. अधोमुखं कंचन लम्बमानं विधूमवैश्वानरतुल्यभासम् २. धमस्य

निश्चित्य भूयो मनसैव कृत्यं
  निःशेषधर्मागमकर्मठोऽसौ ।
पापं तदीयं परधर्मसेवा-
  जातं शिरश्चाप्यसिना व्यलावीत् ॥ २४ ॥

समाधिमुद्रामुकुलीकृताक्षं
  पपात भूमौ च शिरस्तदीयम् ।
स चोदतिष्ठत् प्रतिपन्नजीवो
  बालः परेतो धरणीसुरस्य ॥ २५ ॥

अथागतैरम्बरसीम्नि देवै-
  रादिष्टमार्गो मनुवंशकेतुः ।
अङ्गुष्ठमात्रीं तनुमुद्वहन्त-
  माचान्तपाथोधिमृषिं प्रपेदे ॥ २६ ॥

संभावितस्तत्र निशामुषित्वा
  कुम्भीकुमारेण रघुप्रवीरः ।
लब्ध्वा ततो रत्नमयीं[1] प्रभूषां
  प्रातः प्रतस्थे प्रथमानतेजाः ॥ २७ ॥

विमानराजेन पदं द्वितीयं
  विगाहमानस्य सुरासुरारेः ।
विशामधीशस्य विलोकनीया
  दृशोः पदं पञ्चवटी प्रपेदे ॥ २८ ॥

१. रत्नमयीं च भूषां

तां गाढरूढप्रणयाभिरामां
पश्यन्प्रियाकेलिसखीमदूरे ।
अनुसरन्नप्यवनीतनूजा-
मवाप रामः परमं विषादम् ॥ २९ ॥

आमीलिताक्षः क्षणमार्तिभारा-
दत्यायतश्वासविलोलहारः ।
समानशोकोदयदूनमेवं
विमानराजं वचनं बभाषे ॥ ३० ॥

निरीक्षसे यं पुरतो नगेन्द्रं
निचोलितं नीलवलाहकौघैः ।
सोऽयं गिरिः प्रस्रवणाभिधानो
विस्रम्भसाक्षी मयि[1] वल्लभायाः ॥ ३१ ॥

अस्मिञ्जटायुर्निवसन्नगेन्द्रे
मदर्थमत्युद्धतवीर्यभूमा ।
विनश्वरं प्रोज्झ्य रणे निजाङ्ग-
मनश्वरं प्राप यशःशरीरम् ॥ ३२ ॥

महीधरस्यास्य तटोपकण्ठे
महोपलौघस्खलदूर्मिमालाम् ।
उदारशोभामवलोकयारा-
न्नदीमयीं गौतमपुण्यलक्ष्मीम् ॥ ३३ ॥

---

१. मम

मोदावहा या वसतोऽधिकूलं
सीतासहायस्य पुरा ममाभूत् ।
गोदावरी सैव दृशोरिदानीं
खेदाय जाता विधिवैपरीत्यात् ॥ ३४ ॥

अस्यास्तटोपान्तलतागृहेषु
समीरपोताहृतशीकरेषु ।
निदाघवेलासु दिनापरार्धे
तया समं स्वापसुखं स्मरामि ॥ ३५ ॥

अन्यादृशी दृष्टिरियं मृगीणा-
मन्या च भङ्गिर्गमने गजानाम् ।
आसूचयत्यत्र चिराधिवास-
मद्यापि तस्यास्तरलेक्षणायाः ॥ ३६ ॥

सप्रत्यभिज्ञं मदकुञ्जरोऽयं
संत्यज्य कर्णद्वयतालघोषम् ।
उद्वीक्षते मामुपरि व्रजन्त
मुच्चैरुपाघ्रातुमुदस्य शुण्डाम् ॥ ३७ ॥

स एव मन्ये करिपोतकोऽयं
तदा तया यः परिपोषितोऽभूत् ।
उदूढरागं मृदुपल्लवाग्रै-
र्नखावलूनैर्नवसल्लकीनाम् ॥ ३८ ॥

अत्रोटजं पत्रलतावितानैः
क्लृप्तं सुमित्रासुकृताङ्कुरेण ।
यत्रावसन्ती पुरवाससौख्यं
चित्ते विसस्मार विदेहकन्या ॥ ३९ ॥

चूतोऽयमादौ परिषिक्तमूलः
सीतास्वहस्तोद्धृतवारिपूरैः ।
आलोलशाखाग्रकरैः प्रयान्त-
मालोक्य मामाह्वयतीव दूरात् ॥ ४० ॥

आलोक्यते नन्वयमप्यदूरा-
दाभोगवान् कश्चिदशोकशाखी ।
[1]डोला निबद्धा शिखरे मयास्य
केलीनिमित्तं प्रियवल्लभायाः ॥ ४१ ॥

डोलाविलासेषु मुहुः स्मरामि
व्यालोलवेणीभरलोभनीयम् ।
घर्मोदयालुप्तविशेषकं तत्
निर्माय रम्यं वदनं प्रियायाः ॥ ४२ ॥

पुरीमयोध्यां मिथिलां च हित्वा
परिव्रजन्तं पितुराज्ञया माम् ।
अनुप्रयाता दृढरागबन्धा
वनप्रदेशं वनजेक्षणा या ॥ ४३ ॥

१. तिर्यक्प्रयाते शिखरे मयास्य डोला निबद्धा दयितानुवृत्त्यै ॥

कण्ठीरवप्रौढघटाविकुण्ठा-
कण्ठारवापूर्णदरीमुखेषु ।
संत्यज्य या भीतिमुवास बाला
विन्ध्याद्रिपर्यन्तवनान्तरेषु ॥ ४४ ॥

मायाबलेनापहृता निगूढं
माराभिभूतेन दशाननेन ।
यत्नेन भूयो महता यथावत्
प्रत्याहृता या प्रथमा सतीनाम् ॥ ४५ ॥

तामग्निशुद्धामवनीतनूजा-
मापन्नसत्त्वामतिपेलवाङ्गीम् ।
वाचा जनानामितरो यथाहं
नातः परं शक्यमिहाभिधातुम् ॥ ४६ ॥

तैस्तादृशप्रेमभराभिराम
मर्धं तनोस्त्यक्तवतो वृथैव ।
वज्रेण मन्ये विहितं विधात्रा
पापस्य रामस्य ममास्य चेतः ॥ ४७ ॥

तां तामवस्थामनुचिन्त्य चित्ते
कान्तासहायेन मयाऽनुभूताम् ।
हालाहलेनेव विषिच्यमानो
हा हन्त हन्ताकुलतां व्रजामि ॥ ४८ ॥

---

१. अयं श्लाको नास्ति

इत्थं वदन्तं मनुवंशकेतुं
सद्यः समुद्दीप्तमनोऽभिषङ्गम् ।
आश्वासयत्तद्धनभाथयान-
माश्वेव निन्ये रघुराजधानीम् ॥ ४९ ॥

अथावरुह्यावनिपो विमाना-
दादिश्य तच्चाप्यलकां प्रयातुम् ।
आश्लिष्य पादावनतौ कुमारौ
ताभ्यां सह प्राप पुरीमुदाराम् ॥ ५० ॥

प्रविश्य चास्थानतले निषण्णः
सिंहासने संनतपौरलोकः ।
जनाय तच्छम्बुकनिग्रहाद्यं[1]
जगाद वृत्तं जगदेकनाथः ॥ ५१ ॥

विप्रोऽपि लब्ध्वा तनयं परेतं
सप्राणमल्पेतरमोदभारः ।
अभ्येत्य राजानमनन्यतुल्य-
मस्तौष्ट मृत्योरपि रक्षितारम् ॥ ५२ ॥

इत्थं प्रजानां प्रवरो रघूणां
तत्तद्दुरिष्टं विधिवन्निजानाम् ।

---

१. जम्बूकविनिग्रहाद्यं

निर्मूलयन् निर्मलकीर्तिभूमा
धर्मेण धात्रीं बिभरांचकार ॥ ५३ ॥

अथाखिलौघक्षतये यथाव-
दाहर्तुकामः क्रतुमश्वमेधम् ।
[1]सुमन्त्रमुख्यैः सह मन्त्रिवर्गैः
स मन्त्रयामास सहानुजन्मा ॥ ५४ ॥

[2]संभाजयित्वा स दृशैव पूर्वं
सभान्तराले सचिवानुपेतान् ।
पुरोहितं ब्रह्मविदां वरिष्ठं
वसिष्ठमानम्य वचो बभाषे ॥ ५५ ॥

विजानता चापि नरेण कृत्यं
न जातु वाच्यं पुरतो गुरूणाम् ।
जानन्नपीदं कथयामि किञ्चि-
ज्जातानुतापेन हृदा नियुक्तः ॥ ५६ ॥

आरभ्य बाल्यादनुभूयमानै-
रद्यापि तैस्तैर्विपदां विशेषैः ।
अन्यूनतापं क्वथते नितान्त-
मङ्गारसङ्गादिव मानसं मे ॥ ५७ ॥

१. समं सुमन्त्रप्रमुखैरमात्यैः संमन्त्रयामास...
२. अयं श्लोको नास्ति

किश्चाधिपत्यापरनामधेया-
देनोभराच्चापि सदा बिभेमि ।
धर्मेषु तत्तन्मुनिनिर्मितेषु
यत्प्रत्यवायाः सुलभा नृपाणाम् ॥ ५८ ॥

रत्नानि राज्यं करिणस्तुरङ्गा
वासांसि रूप्याणि च भूषणानि ।
आपादितं सर्वमिदं नृपाणां
पापस्य रूपान्तरमेव मन्ये ॥ ५९ ॥

युद्धं स्वधर्मो धरणीपतीना-
मित्थं मनोर्यद्वचनं महीयः ।
तच्चापि नो सत्यमिति प्रतीमः
संचिन्त्य हिंसादुरितं गरीयः ॥ ६० ॥

एकं दशास्यं प्रति रोषभाजा
मोघं मया निष्करुणाशयेन ।
रक्षोगणानां रणसंगतानां
लक्षाणि कृत्तानि बहूनि मोहात् ॥ ६१ ॥

विहातुकामैर्विविधं दुरिष्टं
नराधिपैस्तत्क्रतवो विधेयाः ।
निमज्जतां दुष्कृतवारिराशौ
नैवास्त्यमीषामपरोऽवलम्बः ॥ ६२ ॥

अहं त्वनर्हो बत कर्म कर्तुं
पत्नीनिरासात्पतितोपमानः
करोमि किं कल्मषवेगशान्त्यै
निरूप्यमेतन्निपुणं भवद्भिः ॥ ६३ ॥

श्रुत्वेति तां प्रश्रयशोकमिश्रां
पृथ्वीपतेर्वाचमयोचदेवम् ।
चिरन्तनीनां निलयः स वाचा-
मरुन्धतीसंचितपुण्यभूमा ॥ ६४ ॥

अलं विषादेन भवादृशानां
लोकोत्तराणां नहि पापलेपः ।
तथापि कार्या जनसंग्रहाय
विनिष्कृतिर्विश्वजनीनवृत्ते ॥ ६५ ॥

यस्याः सवित्री सुमते धरित्री
श्रुतिप्रसिद्धो जनकः पिता च ।
भर्ता भवानप्यत एव पत्नीं
जानीहि सीतामनवद्यशीलाम् ॥ ६६ ॥

चिराधिवासाद्दशकण्ठगेहे
न चापि शङ्क्यः सुचरित्रभङ्गः ।
वक्त्रं प्रयातापि खलस्य राहोः
सुधामयी किं न शशाङ्कमूर्तिः ॥ ६७ ॥

१. श्रुत्वेति वाणीं रघुपुङ्गवस्य प्रत्यूचिवान् प्रश्रयशोकमिश्राम् ।

तथापि नैवाभ्युचिता ग्रहीतुं
जनापवादाज्जगतीतनूजा ।
हित्वा पुनस्तां नच कर्म कर्तुं
युक्तं त्वयाऽतः कथयाम्युपायम् ॥ ६८ ॥

विधाय हेम्ना प्रतिमां तदीयां
निधाय पार्श्वे वचसा ममैव ।
विमुक्तखेदं विधिचोदितानि
विधेहि कर्माणि कृतं विचारैः ॥ ६९ ॥

इत्थं वसिष्ठस्य गिरां विरामे
धीमान् सुमित्रातनयो बभाषे ।
आदाय वेगादवगाह्य चित्र-
मन्तर्गतं भावमिवाग्रजस्य ॥ ७० ॥

यदि क्रतुः कश्चन संविधेय-
स्तदाश्वमेधो हृदि रोचते मे ।
निश्शेषपापप्रशमाय पूर्वैः
श्वश्रेयसाप्त्यै च विनिश्चितोऽयम् ॥ ७१ ॥

त्वष्टुस्तनूजं विनिहत्य वृत्रं
कष्टां दुरिष्टेन दशां प्रयातः ।
इष्ट्वा पुरानेन परं पुमांसं
नष्टाधिरासीत् किल वज्रपाणिः ॥ ७२ ॥

इलो मरुत्तः सगरो रघुश्च
परे च ते ते नरलोकपालाः ।
विलङ्घ्य पापं विशदां प्रशस्तिं
तुरङ्गमेधेन पुरा प्रयाताः ॥ ७३ ॥

इत्यश्वमेधस्तुतिमादरेण
श्रुत्वा सुमित्रातनयोपगीताम् ।
रामो वसिष्ठो भरतः सुमन्त्रः
सभासदोऽन्येऽपि समभ्यनन्दन् ॥ ७४ ॥

आनाय्य शत्रुघ्नमथात्मराष्ट्रा-
दावेद्य चास्मै स्वसमीहितार्थम् ।
सम्यग्विधातुं क्रतुसार्वभौमं
संकल्पयामास रघुप्रवीरः ॥ ७५ ॥

ततः स्वयं संसदि चन्द्रकेतुं
कुमारमाहूय कुमारकल्पम् ।
निर्जित्य पृथ्वीं निखिलां ससैन्यं
न्ययुङ्क्त संचारयितुं तुरङ्गम् ॥ ७६ ॥

बद्धादरं मूर्ध्नि स चैतदाज्ञा-
मुत्तंसयन्नुच्चलकाकपक्षे ।
मेध्यं पुरस्कृत्य हयं प्रतस्थे
धात्रीं विजेतुं सह सैनिकौघैः ॥ ७७ ॥

तं दिग्जयायोच्चलितं कुमारं
श्रुत्वैव सर्वे नरलोकनाथाः ।
अभ्येत्य तूर्णं सभियो विनेतु-
रथैरयोध्यामवकाशशून्याम् ॥ ७८ ॥

यं यं महीपालमसौ जिगीषु-
र्यं यं प्रपेदे विषयं महौजाः ।
तत्तन्निवासादधृणोज्जनौघा-
त्तं तं प्रयान्तं रघुराजधानीम् ॥ ७ ॥

इति व्रजन्तं पथि चन्द्रकेतुं
द्वितीयसूनुर्जनकात्मजायाः ।
लवो ददर्शाश्रमसीम्नि सार्कं
वल्मीकयोनेर्विहरन्वयस्यैः ॥ ८० ॥

तुरङ्गमेधाय महीं विजेतुं
चरन्तमाकर्ण्य स चन्द्रकेतुम् ।
आत्तेषुचापस्तरसा रुरोध
क्षात्रं स्वतेजः प्रकटं वितन्वन् ॥ ८१ ॥

इत्याह चारे नरपालसूनोः
यद्यस्ति ते चेतसि मानलेशः ।
युद्धाय सज्जो भव सद्य एव
मुक्त्वा न चेद्याहि तुरङ्गमेनम् ॥ ८२ ॥

अम्भोधिकाञ्च्या मनसापि धात्र्या-
मन्येन केनाप्यनिरुद्धमार्गः ।
तपोवने तेन तथा निरुद्ध-
श्चुकोप सौमित्रिसुतो महौजाः ॥ ८३ ॥

रक्तेक्षणान्तः स च वाचमूचे
धिक् त्वां वटो दुर्विनयाधिवासम् ।
अपाकरिष्यामि मदं त्वदीयं
शितैरिदानीं विशिखैर्ममेति ॥ ८४ ॥

दृप्तौ ततस्तौ रघुराजपुत्रा-
वज्ञाततत्त्वावतिमात्ररौद्रौ ।
सज्जे च कृत्वा धनुषी सरोषौ
सज्जावभूतां समरोत्सवाय ॥ ८५ ॥

आस्फालयन्तौ तरसा धनुर्ज्या-
मारोपितभ्रूकुटिभीषणास्यौ ।
आरक्तनेत्रावतिमन्युवेगा-
दन्योन्यमेतौ क्षणमैक्षिषाताम् ॥ ८६ ॥

मुक्तैरथो राघवनन्दनाभ्यां
विद्योतमानज्वलनप्रकाशैः ।
आनीलपुङ्खैर्विशिखैरसंख्यै-
राकाशमासीदवकाशशून्यम् ॥ ८७ ॥

जितश्रमत्वाल्लघु लीलयैव
कृतप्रतीकारकृतोरभेदम् ।
पटुत्वभाजोः सकलायुधेषु
तटस्थतामाप तयोर्जयश्रीः ॥ ८८ ॥

अथ प्रयुक्तस्य लवेन रोषा-
त्स जृम्भकास्त्रस्य विजृम्भणेन ।
अवाप किंचित्सहसा विमोहं
ससैनिकः संयति चन्द्रकेतुः ॥ ८९ ॥

निजाश्रमात्तावदुपेत्य मध्ये
निवार्य युद्धं वरुणात्मजन्मा ।
नितान्तमोदं रघुराजपुत्रौ
निशामयन्नित्थमुवाच वाचम् ॥ ९० ॥

मद्वाक्यतो मा कुरुतं विरोधं
युक्तैव मैत्री युवयोश्चिराय ।
युवामभिन्नौ परमार्थतस्तत्
कथावकाशे कथयामि पश्चात् ॥ ९१ ॥

त्वया निवृत्तेन रघूत्तमाय
नेयं प्रवृत्तिर्विनिवेदनीया ।
उत्सेकशाली बत दुर्विनीतो
वत्सोऽयमित्याह च चन्द्रकेतुम् ॥ ९२ ॥

इत्थं निरुद्धौ मुनिपुंगवेन
युद्धान्निवृत्तौ रघुराजपुत्रौ ।
विरेजतुस्तौ विधुसन्निधाना-
दङ्गारशुक्राविव सुप्रसन्नौ ॥ ९३ ॥

अथ प्रणम्याध्वरदर्शनार्थ-
मामन्त्र्य वल्मीकजनिं मुनीन्द्रम् ।
सामात्यसैन्यः पृथिवीं विजित्य
सौमित्रिसूनुः समगादयोध्याम् ॥ ९४ ॥

दूताननादध्वरमात्मभर्तुः
प्रीतौ निशम्यानुचरैरुपेतौ ।
आदाय तांस्तानुपदाविशेषा-
नाजग्मतुर्वानरराक्षसेन्द्रौ ॥ ९५ ॥

तौ संनियुक्तौ रघुनायकेन
स्निग्धात्मना सोदरनिर्विशेषम् ।
तत्तत्क्रियासाधनसादनेषु
यत्तावभूतामतिमात्रदक्षौ ॥ ९६ ॥

ततो विनिष्क्रम्य पुरात्सुपुण्ये
दिने दिनेन्द्रान्वयपुण्यभूमा ।
समं वसिष्ठप्रमुखैर्मुनीन्द्रैः
स गोमतीतीरमुपाससाद ॥ ९७ ॥

प्राग्वंशधाम्नि प्रचुराज्यगन्धे
प्राक्कूलदर्भास्तृतवेदिभागे ।
प्रारब्धशस्त्रः प्रगृहीतसामा
प्रावर्तताथो प्रवरः क्रतूनाम् ॥ ९८ ॥

विनिःसृता तत्र वितानवह्ने-
र्वियत्पथे धूमलता विरेजे ।
विमानभाजां विबुधाङ्गनानां
विवर्धिता कुन्तलकान्तिपूरैः ॥ ९९ ॥

आमोदभाजः सह शिष्यसङ्घै-
र्मीमांसमाना निगमार्थतत्वम् ।
आजग्मुरालोकितुमश्वमेध-
माशान्तरेभ्यो मुनिसार्वभौमाः ॥ १०० ॥

वल्मीकजन्मा विरचय्य काव्यं
रम्यं रघुप्रौढकथानिबद्धम् ।
अध्याप्य सीतातनयौ महाभ्या-
मभ्याजगामाध्वरदर्शनार्थी ॥ १०१ ॥

ताभ्यां ततः संसदि तत्र तत्र
तां गापयामास कृतिं स्वकीयाम् ।
मुख्यं यशः स्वस्य च राघवस्य
प्रख्यापयिष्यन् प्रथमः कवीनाम् ॥ १०२ ॥

तौ संचरन्तावथ तत्र तत्र
काव्यात्मिकां कर्णसुधां किरन्तौ ।
आकर्ण्य लोकादधिपो रघूणा
माह्वाययामास कुतूहलेन ॥ १०३ ॥

कर्मान्तरे संसदि संनिविष्टं
चर्मासने शान्तगभीरवेषम्[1] ।
आमेदतुस्तौ नृपतिं कुमारा-
वंसे दधानौ मधुरां विपञ्चीम् ॥ १०४ ॥

तौ पश्यतो विश्वमनोभिरामौ
कुमारकौ दाशरथेरकस्मात् ।
अत्यायतार्द्रं हृदयं बभूव
शक्तिर्बलिष्ठा खलु वासनायाः ॥ १०५ ॥

तस्यां सभायामथ तौ निविष्टौ
संचोदितौ कौतुकिना नृपेण ।
अग्राम्यशब्दार्थकथास्वरूपा-
मगायतामादिकवेः कृतिं ताम् ॥ १०६ ॥

वैदग्ध्यभाजो वरुणात्मजस्य
वैदर्भरीत्या[2] नवया भणित्या ।

१. घोषम्
२. वैदर्भमार्गे वचसां विलासैः ।

स्वरेण तन्त्रीलयसंयुतेन
तयोश्च संमोदमियाय संसत् ॥ १०७ ॥

भूतामवस्थामुपवर्ण्यमानां
चेतोहराभ्यां मुनिदारकाभ्याम् ।
वाङ्माधुरीक्षिप्तधियो जनौघा-
स्तां मेनिरे चेतसि वर्तमानाम् ॥ १०८ ॥

सा शृण्वती कर्णरसायनं तत्
गीतामृतं बालकयोरपूर्वम् ।
चित्रीयमाणा जनता बभूव
मध्येरसाम्भोनिधि दूरमग्ना ॥ १०९ ॥

स्वरेण रूपेण विलोकनेन
गतेन गम्भीरतया च तैस्तैः ।
तौ बालकौ राघवानिर्विशेषा-
वालोक्य शङ्काकुलितो जनोऽभूत् ॥ ११० ॥

आश्लिष्य तौ गाढमपाङ्गपातै-
रौत्सुक्यहर्षाकुलितान्तरात्मा ।
स्वयं रघूणामधिपः कुमारौ
गिरं बभाषे विगलन्मरन्दाम् ॥ १११ ॥

लोकत्रयीमंवननायमानं
नादं च रूपं च निसर्गरम्यम् ।

आपीय वत्सौ युवयोश्चिराय
श्रोत्रे च नेत्रे च न तृप्यतो मे ॥ ११२ ॥

कर्णाटमुद्रासदृशः स्वरो वां
कर्णाभिरामं कविकर्म चैतत् ।
योगोऽनयोः कंचन संचिनोति
रसं पयःफाणितयोरिवायम् ॥ ११३ ॥

सूक्तिः सुधास्यन्दसधर्मिणीयं
सूते कवेः कस्य परां प्रशस्तिम् ।
गुरुत्वलाभाद्युवयोर्जगत्यां
पवित्रतामाप च कस्य गोत्रम् ॥ ११४ ॥

श्रुत्वेति वाणीं श्रवणाभिरामां
प्रत्यूचतुस्तौ नृपतिं कुमारौ ।
आमोदभाजौ वचसां म्रदिम्ना
सामाजिकानां हृदयं हरन्तौ ॥ ११५ ॥

संमाननीयो जयति त्रिलोक्यां
वल्मीकजन्मा कविसार्वभौमः ।
निरस्य दूरे स्वव[2]रं विरिञ्चं
सरस्वती यं स्वयमेव भेजे ॥ ११६ ॥

१. सरसः  २. स्थविरं

इयं कृतिस्तस्य मुनेरुदारा
त्रयीव साक्षादरविन्दयोनेः ।
विद्यासु सर्वासु विचक्षणेन
तेनैव चावां विधिवद्विनीतौ ॥ ११७ ॥

इतो विदूरे कृतपर्णशालः
सहासदाद्यैरपि शिष्यसङ्घैः ।
स वर्तते संप्रति संभृतश्री-
स्तवाध्वरालोकनकौतुकेन ॥ ११८ ॥

इतीरितो तापसदारकाभ्यां
कुतूहलावेशतरङ्गितात्मा ।
सभाजनीयं नृपतिः सभायां
समानिनायादिकविप्रकाण्डम् ॥ ११९ ॥

स चाज्ञया सावरजस्य राज्ञः
सदः समाढौकत तत्कवीन्द्रः ।
उद्वेलकौतूहलनिश्चलाक्षै-
रुद्वीक्ष्यमाणः सकलैः सदस्यैः ॥ १२० ॥

कॢप्तोपचारेण नृपेण दत्ता-
मध्यास्त मृद्वीमथ रत्नपीठीम् ।
उद्दामधामा मुनिपुङ्गवानां
मध्ये ग्रहाणामिव रोहिणीशः ॥ १२१ ॥

अथानुयुक्तो रघुनायकेन
कुमारयोर्वृत्तमुदात्तचताः ।
आख्यातुमस्मै स्वसमीहितं त-
दारब्धवानादिकविः समोदम् ॥ १२२ ॥

दिक्कामिनीपीनपयोधरश्री-
कर्पूरपूरायितकीर्तिराशे ।
राजन्निमां संसदि निर्व्यलीकां
वाचं मदीयां शृणु सावधानम् ॥ १२३ ॥

त्रस्तेन लोकादनवद्यशीला
त्यक्ता त्वया या धृतगर्भभारा ।
शक्त्या विधातुर्मिथिलेन्द्रपुत्री
सख्येव नीता मम सन्निधिं सा ॥ १२४ ॥

सीरध्वजं पङ्क्तिरथं च सख्या-
द्वात्सल्यतस्त्वां च गुणाम्बुराशे ।
आलोच्य सुस्निग्धहृदा मया सा
बाला गृहीता सुचरित्रभूषा ॥ १२५ ॥

आश्लिष्य तैस्तैर्मधुरैर्वचोभि-
राश्वास्यमाना मुनिदारवृन्दैः ।
त्वदेकचित्ता नरपालपुत्री
मदाश्रमे सा वितनोति वृत्तिम् ॥ १२६ ॥

तया प्रसूतौ तव वीर्ययोगात्
जानीहि वत्सौ यमजाविमौ द्वौ ।
कुशाभिधानः प्रथमोद्भवोऽयं
लवोऽयमस्यावरजो महौजाः ॥ १२७ ॥

आमोटयन्तौ करिपोतकर्णा-
नापाटयन्तौ च सटा हरीणाम् ।
संक्रीडमानावतिमात्रसत्वा-
वेतौ पदे वृद्धिमितौ मदीये ॥ १२८ ॥

उत्क्रान्तबाल्यावथ किंचिदेतौ
विक्रान्तिविस्मापितविश्वलोकौ ।
मया विनीतौ सकलागमेषु
मनो हरन्तौ मतिवैभवेन ॥ १२९ ॥

सङ्गीतचुञ्चोर्वचसा महर्षेः
संगृह्य राजन् भवतश्चरित्रम् ।
पद्यैर्मया काव्यतया निबद्ध-
मध्यापितौ चाप्यनवद्यशीलौ ॥ १३० ॥

१. अधिकः श्लोकः—

न त्वं महाराज वयं जगत्यां निःसंशयं पुण्यकृतां पुरोगाः ।
अस्माभिरारादवलोकितानि यत्पुत्रयोस्ते शिशुचेष्टितानि ॥

अतो महासेनगजाननाभ्यां
युतामिव क्ष्माधरराजकन्याम् ।
स्वीकृत्य पत्नीं हरवच्चिराय
साकं सुताभ्यां प्रमदं भजेथाः ॥ १३१ ॥

प्राचेतसस्येति मुनेरुदारा-
माकर्ण्य वाणीमधिपो रघूणाम् ।
औत्सुक्यसंमोदकृतानुराग-
त्रपाकुलात्मा वचनं बभाषे ॥ १३२ ॥

महामुने मद्विषयस्त्वयाद्य
महान् प्रसादः प्रकटीकृतोऽयम् ।
दैवेन विभ्रंशितभाग्यपूरं
यन्माकृथा भाग्यवतां पुरोगम् ॥ १३३ ॥

निस्संशयं त्वद्वचसा मुनीन्द्र
शुद्धां विजानामि विदेहकन्याम् ।
भवादृशानां यदि वागसत्या
श्रुतिस्मृतीनामपि सत्यता का ॥ १३४ ॥

तात स्नुषां ते धरणीतनूजां
पुरैव जाने परिशुद्धभावाम् ।
त्रस्तेन लोकान्न[1] परं मया सा
त्यक्ता शपे[2] त्वच्चरणाम्बुजाभ्याम् ॥ १३५

---

१. च्च ? २. प्रिया

तदत्र सीता स्वयमेत्य लोकं
प्रत्याययत्वात्मचरित्रशुद्धिम् ।
असंशयं पुत्रवतीं ततस्ता-
मङ्गीकरिष्यामि भवन्निदेशात् ॥ १३६ ॥

निर्मायरम्यामिति राघवस्य
वल्मीकजन्माथ निशम्य वाणीम् ।
तथेति तामाश्रमतः स्वशिष्यै-
रानाययामास कृतार्थचेताः ॥ १३७ ॥

अथापरेद्युः पुरतो जनानां
महामुनीनां च सहानुजन्मा ।
आह्वाययत्संसदि रामचन्द्रः
प्राचेतसं प्रस्तुतकार्यहेतोः ॥ १३८ ॥

स च प्रमोदाकुलितान्तरङ्गः
सदः प्रपेदे प्रवरो मुनीनाम् ।
तपस्विनीवेषसमुज्ज्वलाङ्ग्या
तया समं मैथिलराजपुत्र्या ॥ १३९ ॥

तां नीयमानां मुनिपुङ्गवेन
श्रियं यथा पङ्कजसंभवेन ।
आश्चर्यविस्तारितनेत्रयुग्मा
आलोकयामासुरशेषलोकाः ॥ १४० ॥

तदेकवेणीपरिभासमानं
पदारविन्दार्पितदृष्टिनम्रम् ।
निवेदयामास जनाय शुद्धिं
निजस्य वृत्तस्य वपुस्तदीयम् ॥ १४१ ॥

अशक्नुवन्तः पतिदेवतां ता-
मालोकितुं प्रौढतपःप्रभावाम् ।
आलोकमार्गात् प्रतिसंहृताक्षा
अवाङ्मुखास्तस्थुरशेषलोकाः ॥ १४२ ॥

मुनीन्द्रभूमीन्द्रवलीमुखेन्द्र-
निशाचरेन्द्रादिनिरन्तरालाम् ।
नीत्वा सभामादिकविस्ततस्तां
प्रीत्या बभाषे दशकन्धरारिम् ॥ १४३ ॥

राजन्निमां तामवनीतनूजा-
माजन्मशुद्धामवगच्छ धीमन् ।
अरुन्धतीकीर्तिमनुत्तमेन
निरुन्धतीमात्मचरित्रभूम्ना ॥ १४४ ॥

अहं महर्षेश्च्यवनस्य सूनु-
र्मया न सत्येतरमुक्तपूर्वम् ।
अतो ममैवास्य गिरा नरेन्द्र
सहात्मजां स्वीकुरु धर्मपत्नीम् ॥ १४५ ॥

तामप्यसौ ते दयितः प्रियां त्वां
जानाति साध्वीं सुमतिस्तथापि ।
अत्रत्यलोकस्य विनिश्चयाय
वत्से कुरु प्रत्ययमित्यवादीत् ॥ १४६ ॥

सा शृण्वती तस्य मुनेर्गिरं ता-
मालोकयन्ती च पतिं पुरस्तात् ।
विषामृताभ्यामभिषिच्यमाना
लतेव कांचिद्विकृतिं प्रपेदे ॥ १४७ ॥

ततो विनिश्चित्य हृदैव कृत्यं
मनस्विनी मैथिलराजपुत्री ।
न्यषीददाचम्य पयः पवित्रं
वाल्मीकिशिष्योपहृतं धरायाम् ॥ १४८ ॥

उद्वृत्तपारुष्यविषादरागं[1]
वक्त्रारविन्दं विनतं वहन्ती ।
पृथ्वीं सवित्रीं प्रति साश्रुनेत्रं
बद्धाञ्जलिर्वाचमवोचदेवम् ॥ १४९ ॥

त्वया प्रसूता वसुधे किलाहं
त्वमेव मातः शरणं ममाद्य ।
अभिप्लुतां दुःखपयोधिमध्ये
समुद्धरैनां तनयामनाथाम् ॥ १५० ॥

१. उद्यत्त्रपारोषविषादरागं वक्त्रारविन्दं विनता वहन्ती :

मनोवचःकर्मभिरार्यपुत्रे
न मे कदाचिद्व्यभिचारलेशः ।
यथा तथा साक्षिणि कर्मणां त्वं
विश्वंभरे देहि ममावकाशम् ॥ १५१ ॥

इत्थं वदन्त्यां जनकात्मजाया-
मुद्वेलशोकाकुलमानसायाम् ।
जातादकाण्डे विवरात्पृथिव्या-
स्तेजस्तडित्पिञ्जरमाविरासीत् ॥ १५२ ॥

अदृश्यताथो स्वयमेव धात्री
भुजङ्गमाधीशफणाधृतायाम् ।
निषेदुषी काञ्चनपीठिकायां
निःश्वासवाताहतिलोलहारा ॥ १५३ ॥

आलीननेत्रां दयिते तनूजा-
मादाय विन्यस्य च सा निजाङ्के ।
कराञ्चलेनास्रकणं क्षिपन्ती
तदीयमुर्वी रुदती तिरोऽभूत् ॥ १५४ ॥

आलोकयन्तः सुचरित्रनिष्ठा-
माश्चर्यभूतामवनीसुतायाः ।
सन्तानसूनैः सुरसिद्धसंघाः
संछादयामासुरिलामशेषाम् ॥ १५५ ॥

पतिव्रते मैथिलि साधु साधु
त्वमेव धन्या जगतीति वाणी ।
दिवि स्थितानां च भुवि स्थितानां
विमिश्रिता मेदुरतां प्रपेदे ॥ १५६ ॥

आदाय कान्तामथ भूतधात्र्या-
मन्तर्हितायां दशकन्धरारेः ।
निरूढमन्तः सहसैव शोकं
निपीय रोषो नितरां जजृम्भे ॥ १५७ ॥

तस्यातिमात्रारुणनेत्रकोण-
माबद्धभीमभ्रुकुटीसनाथम् ।
युगव्यपाये मदनान्तकस्य
जगद्दिधक्षोरिव वक्त्रमासीत् ॥ १५८ ॥

प्रियापहारेण धरां प्रतीत्थं
प्ररूढरोषस्य दशाननारेः ।
कोदण्डदण्डे निहिते पुरस्ता-
दाताम्रवर्णा निपपात दृष्टिः ॥ १५९ ॥

ततो रघूणां कुलदेशिकेन्द्रः
संरम्भमुर्वीं प्रति ताटकारेः ।
तैस्तैरुदारैरुपपत्तिमद्भि-
र्वाक्यैर्वसिष्ठः शमयांचकार ॥ १६० ॥

रामोऽपि दैवस्य गतिं विचित्रा-
मलङ्घनीयां बहुमन्यमानः ।
नियम्य रोषं निदधे जितात्मा
सीतागतं प्रेम कुशे लवे च ॥ १६१ ॥

अथ क्षितीशः क्रतुमश्वमेधं
विधानदृष्टेन पथा विधाय ।
तृप्तांश्चकाराहुतिभिः सुरौघान्
पृथ्वीसुरौघानपि दक्षिणाभिः ॥ १६२ ॥

काकुत्स्थस्तदनु समाप्य सप्ततन्तुं
गोमत्यामवभृथमज्जनं विधाय ।
सामात्यः सबलपुरोहितः प्रपेदे
पौरस्त्रीविरचितमङ्गलामयोध्याम् ॥ १६३ ॥

प्रविश्य च पुरोत्तमं कपिनिशाचराधीश्वरौ
नृपानपि महामुनीन् प्रसृमरप्रसादोदयान् ।
विसृज्य विधिवत्स्वयं सहजपुत्रमित्रैः समं
शशास धरणीं चिरं शमितकण्टकां राघवः ॥१६४॥

इति उत्तररामचरितकाव्ये चतुर्थः सर्गः ॥

१. इत्युत्तरराघवीये चतुर्थः सर्गः

# पञ्चमः सर्गः ।

अथ मनुकुलनाथः प्रेयसीं मैथिलीं तां
मनसि महितशीलां सन्ततं वीक्षमाणः ।
प्रतिकृतिमदसीयामेव पत्नीं वितन्व-
न्नकृत सुकृतशाली सप्ततन्तूननेकान् ॥ १ ॥

कैकेयीतनयो निहत्य समरे शैलूषनाम्नः सुतान्
गन्धर्वाधिपतेर्विधाय च पुरद्वन्द्वं तदीये पदे ।
पुत्रौ तत्र निवेश्य विक्रमधनौ तक्षं तथा पुष्कलं
भूयः पूर्वजमाससाद कुतुकी वात्सल्यवारांनिधिम् ॥

शत्रुघातिसुबाहुभ्यां मधुराविदिशे पुरे ।
दत्वा सुताभ्यामापेदे शत्रुघ्नो रामसन्निधिम् ॥३॥

भङ्गदमङ्गदमसतां
तुङ्गबलं तदनु चन्द्रकेतुं च ।
लक्ष्मणतनयौ राम-
श्चक्रे कारापथाधीशौ ॥ ४ ॥

निःशेषामनुभूय भोगपटलीं तिस्रो जनन्यस्ततः
पश्यन्त्यस्तनयं पुरो रघुपतिं प्रत्यक्षनारायणम् ।
वेलातीतपराक्रमं बलरिपोरर्धासनाध्यासिनं
स्वस्थं[1] स्वोपहितोपचारविधयो भर्तारमापेदिरे ॥५॥

ते निवापक्रियां चक्रुः सवित्रीणां समाहिताः ।
सदृशीमन्ववायस्य सौभ्रात्रस्य च राघवाः ॥ ६ ॥

कदाचिदथ राघवं विहितकृत्यमित्यास्थितं
सरोरुहभवाज्ञया स्वयमुपाजगामान्तकः ।
विहाय कुहनावटुः प्रकृतिभीषणामाकृतिं
धृताधिकशमोज्ज्वलां धरणिदेवतां धारयन् ॥ ७ ॥

तापसविग्रहभाजं
तापनिमानम्य तदनु सानन्दम् ।
तपनीयपीठसंस्थं
तपनान्वयमौलिरत्नमित्यूचे ॥ ८ ॥

अयि ब्रह्मन् कस्त्वं किमिह करणीयं तव मया
कुतो वा संप्राप्तः कथय यदि गुह्येतरमिदम् ।
अमर्त्यानामन्यो धृतमुनिशरीरः किमु भवा-
नसामान्यं तेजस्तव मनसि शङ्कां दिशति मे ॥ ९ ॥

१. पौलोमीविहितोपचारविधयो

मधुरामिति रामचन्द्रवाणीं
मुनिराकर्ण्य तमित्थमाबभाषे ।
मृदुहाससुधारसानुलिप्तां
विदधद्विस्मितमानसः[1] सभां ताम् ॥ १० ॥

राजन्नंशुमदन्ववायमुकुटीमाणिक्य मत्कामिमां
वाणीं संशृणु सावधानमखिलानुत्सार्य दूरे जनान् ।
यद्यागच्छति सन्निधौ कथयतोरन्योन्यमेवावयोः
कश्चित्तं करवाललूनवपुषं कुर्यां ममाज्ञाबलात् ११ ॥

ततो निरस्य जनतां द्वारि संस्थाप्य लक्ष्मणम् ।
बद्धाञ्जलिपुटो रामः प्राह ब्रूहीति तापसम् ॥१२॥

स च संतोषसंभारसंफुल्लनयनाम्बुजः ।
अचिरोदितपीयूषरुचिरां वाचमाददे ॥ १३ ॥

यं वामेतरमामनन्ति नयनं देवस्य गौरीपते-[2]
र्यं वा स्तौति समस्तदैवतमयं साधीयसी वैखरी ।
यद्गोत्रं च पवित्रितं त्रिभुवनाधीश त्वया जन्मना
तस्यामुं तनयं त्विषामधिपतेर्जानीहि मामन्तकम् ॥

१. मानसां सभां ताम्

२. लक्ष्मीपतेः

कच्चिद्विजानाति भवान् भवन्तं
विश्वत्रयीजन्मनिदानभूतम् ।
जातं जगत्यां दशकण्ठकण्ठ-
च्छेदाय वेदान्तरसं पुमांसम् ॥ १५ ॥

कल्पापाये सकलमुदरे साक्षिणो यस्य विश्वं
कारुण्याब्धे सुचिरमवसद्वीतसंबाधलेशम् ।
स त्वं दीनानवितुममरानस्मदाद्यानकार्षीः
कौसल्याया जठरकुहरे हन्त कृच्छ्रेण वासम् ॥ १६ ॥

यद्वा ते देवताबन्धोर्न किंचिदिदमुच्यते ।
यन्निन्द्यास्वपि चोत्पत्तिं धत्से मत्स्यादियोनिषु ॥१७

यद्वेलामतिवर्तते न जलधिर्यद्दीप्यते पावको
यच्चेयं धरणी न मज्जति जले यद्वाति वा मारुतः ।
पर्यायेण गतागतं वितनुते यच्चाम्बरे भास्कर-
स्तत्सर्वं भवदाज्ञयैव भगवन् भक्तानुकम्पानिधे ॥१८॥

वलरिपुमुखाः सर्वे देवास्तवैव नियोगत-
श्चकितहृदया वृत्तिं यत्ता भजन्ति निजां निजाम् ।

१. अधिकः श्लोकः—
स्निग्धेन चक्षुषा नाथ सुग्रीवमिव पश्य माम् ।
सूर्यात्मजेषु संप्रीतिः ननु साधारणी तव ॥

२. मद्भूतम्

दिनमनु जनान् गेहाद्देहाद्विकृष्य विना कृपां
सपदि नयतः कर्मैतस्मिन्ममैव निदर्शनम् ॥ १९॥

कैलासोद्धारकेलीप्रथितभुजबलः सूदितो राक्षसेन्द्रः
पौलोमीपत्रलेखाप्रणयनपटुतां प्रापितो देवराजः ।
उद्यच्चन्द्रांशुरम्या दिवि भुवि च परा स्थापिता कीर्तिलक्ष्मीः
पुत्रैरुद्दामसत्त्वैरिदमपि च कुलं मण्डितं चण्डभानोः ॥२०॥

अवसितमवतारकृत्यमत्र
प्रविश निजां तनुमेव विश्वयोने ।
सुरपरिषदुदूढमोदभारा
भवतु विलोक्य चिरागतं भवन्तम् ॥ २१ ॥

देव त्वया धृतवता मनुजत्वमुद्रा-
मेषा चिरं वसुमती विहिता सनाथा ।
आधेहि संप्रति मुदं त्रिदशालयस्य
साधारणी ननु जगत्त्रितयी तवेयम् ॥ २२ ॥

अम्भोजयोनेर्वचसा भवन्त-
मम्भोधिजासंचितपुण्यराशे ।
आपेदिवानस्म्यतिगोप्यमेन-
माख्यातुमर्थं धृतमर्त्यरूपम् ॥ २३ ॥

इत्येवं वदति नितान्तभक्तिभारं
   प्रोन्मीलत्पुलकनिचोलिते कृतान्ते।
दुर्वारप्रतिघदुरासदः प्रकृत्या[1]
   दुर्वासाः स्वयमभजत् सभाग्रघाणम् ॥ २४ ॥

अवगम्य तमग्रजं दिदृक्षुं
   मुनिवर्यं रघुनायकानुजन्मा।
प्रतिपालय किंचिदत्र धीम-
   न्निति बद्धाञ्जलिराननतो ययाचे ॥ २५ ॥

वारितोऽपि[2] बहुशो निवारणं
   द्वारि नैव ममृषे मुनीश्वरः।
सोऽभवद् भ्रुकुटिभीषणाकृति-[3]
   र्दुस्त्यजा प्रकृतिरेव देहिनाम् ॥ २६ ॥

अभिलषितविघातादाशुकोपे तदानीं
   ज्वलति मुनिकृशानौ रामचन्द्रानुजन्मा।
स्वयमभिपतितेऽस्मिन्धर्मकृच्छ्रे विधेयं
   किमिह बत मयेति व्याकुलत्वं प्रपेदे ॥ २७ ॥

उभयथापि[4] विपत्तिमुपागता-
   मथ विचिन्त्य धिया परिपक्वया।
मुनिरुषा मनुवंशपरिक्षया-
   न्निजविनाशममंस्त परं वशी ॥ २८ ॥

प्रवृत्त्या   २. वारितोऽपि   ३. भीषणाननो   ४. उभयतोऽपि

गत्वाथ तूर्णं मणिमन्त्रशालां
शक्तिं विधातुर्बहुमन्यमानः ।
तमागतं कोपधनं मुनीन्द्रं
निवेदयामास निजाग्रजाय ॥ २९ ॥

रामस्तु तत्क्षणोद्भूतां विनियम्य शुचं हृदा ।
नितान्तगम्भीरमनाः कृतान्तमिदमब्रवीत् ॥३०॥

आगतस्त्वमचिन्त्यात्मन्नादेष्टा भगवानजः ।
[1]अवश्यं भविता चायमर्थस्तमनुमन्महे ॥ ३१ ॥

इत्थं मितेन वचनेन विसृज्य कालं
प्रत्यग्रमोदविकसद्वदनारविन्दम् ।
सद्यः प्रवेश्य च मुनिप्रवरं सभायां
नत्वा यथावदुचितामकरोत्सपर्याम् ॥ ३२ ॥

संभावितः संसदि राघवेण
संप्रीतचेताः प्रययौ मुनीन्द्रः ।
विशुद्धतत्त्वागमनेन पूर्णा
विनापि कार्यं विचरन्ति सन्तः ॥ ३३ ॥

अथानुचिन्त्यापदमत्यसह्या-
मतर्कितामापतितामकाण्डे ।
आलोकयन्नम्रमुखो धराया-
मास्ते स रामः क्षणमाकुलात्मा ॥ ३४ ॥

1. अवश्यभाविनी चेयं गतिस्तदनुमन्महे ॥

तदनु विदितवेद्यः साधु निश्चित्य चित्ते
विधिकृतमथ[1] कृत्यं कृत्स्नमुत्तुङ्गधामा ।
सदसि समुपविष्टः संवृतो मन्त्रिमुख्यैः
सहजमिति बभाषे लक्ष्मणं रामचन्द्रः ॥ ३५ ॥

विदेहतनया त्वं च मदीयमवलम्बनम् ।
द्वयमेव महारण्ये परिचङ्क्रमणादिषु ॥ ३६ ॥

शक्त्या विधातुः कथितैः किमन्यै-
स्त्यक्ता मया निष्करुणं प्रिया सा ।
कष्टां पुनः संप्रति हन्त हन्त
कक्ष्यां प्रविष्टोऽसि तथाविधां त्वम् ॥ ३७ ॥

कान्तया च तनयैश्च सोदरै-
र्बान्धवैरपि परैः समागमम् ।
स्वान्तसीम्नि कलये चलाचलं[2]
पान्थसङ्गमसमं शरीरिणाम् ॥ ३८ ॥

कृतां कृतान्तस्य पुरः प्रतिज्ञां
कथं वृथा तामधुना करोमि ।
कुण्ठीकृतप्रेमभरोऽर्पयामि
कण्ठे कथं वा भवतः कृपाणीम् ॥ ३९ ॥

---

१. विगततमसि  २. यथाखिलं

त्यक्तोऽसि त्वं मया वत्स सत्यलोपातिभीरुणा ।
परस्परसमौ मन्ये परित्यागवधावुभौ ॥ ४० ॥

श्रुत्वेति वाणीमथ पूर्वजस्य
नत्वा पदाम्भोजयुगं तदीयम्[1] ।
हित्वा गृहानप्यतुलां विभूतिं
सद्यः सुमित्रातनयः प्रतस्थे ॥ ४१ ॥

सरयूमवगाह्य पूतगात्रः
पुलिनेऽस्या मृदुवालुकाभिरामे ।
क्षणमास्त जितेन्द्रियः परस्मि-
न्नमले धाम्नि निलीयमानचेताः ॥ ४२ ॥

अवतीर्य ततो वियत्पथा-
दमरेन्द्रः स्वयमेव सादरम् ।
अनघं रथमात्मनो जवा-
दमुमारोप्य दिवं प्रपेदिवान् ॥ ४३ ॥

विशुद्धात्मा रामस्तदनु विगताज्ञानपटलो
विमुच्याशापाशान्विषयमृगतृष्णाविरचितान् ।
कुशावत्यां पुत्रं कुशमुपनिवेश्यास्य सहजं
लवं श्रावस्त्यां चाप्यनुजमनुगन्तुं मतिमधात् ४४

१. पदे तस्य विरक्तचेताः

वसिष्ठाद्यैः साकं मुनिभिरमलज्ञानविभवैः
कनिष्ठाभ्यां द्वाभ्यां विनयविनताभ्यामपि समम् ।
प्रतिष्ठासन् पौरान् [1]सकरुणकटाक्षैः शिशिरयन्
वरिष्ठात्मा रामः समचलदुदीचीं प्रति दिशम् ॥४५॥

विरहमसहमाना विश्वनाथस्य सर्वे
विरतविषयकेलीवासनाः पौरलोकाः ।
ससुतसहजकान्तास्वान्तपुष्यत्प्रबोधाः
सकुतुकमनुजग्मुः स्वामिनं रामचन्द्रम् ॥४६॥

सुग्रीवोऽपि निशम्य वृत्तमखिलं भर्तुस्तदैवाङ्गदं
किष्किन्धाधिपतिं विधाय विधिवत्तुङ्गापदानोज्ज्वलम् ।
साकं जाम्बवदञ्जनासुतमुखैरभ्येत्य रामान्तिकं
प्रीतात्मा निपपात पादसविधे मोदाश्रुपूर्णेक्षणः॥४७॥

विभीषणोऽपि त्वरया परीतो
विभावरीचारि[2]चरैरसंख्यैः ।
विभाकरापत्यवदभ्युपेत्य
विभोः पपाताथ पदारविन्दे ॥ ४८ ॥

सुसत्कृतौ तौ रघुनायकेन
प्रसृत्वरप्रेमरसैरपाङ्गैः ।

---

१. मधुरमृदुहासैः  २. बले

निरर्गलप्रीतिभराब्रभूतां
पुरःसरौ तस्य दशाननारेः ॥ ४९ ॥

अनुगमनकुतूहलाकुलाना
मनुजनिशाचरवानरादिकानाम् ।
विततिभिरभवन्निरन्तराला
सपदि धरा सुरपुङ्गवैरिव द्यौः ॥ ५० ॥

इत्थं मुदा परमया व्रजतो हृदन्ते
पृथ्वीसुतागलविभूषणपुण्यराशेः ।
सच्चिन्मयः स भगवानहमेव साक्षाद्
विश्वत्रयीपतिरिति स्मृतिराविरासीत् ॥ ५१ ॥

बद्धानन्दं समेतैर्वियति निचुलितैः सिद्धगन्धर्वदेवै-
र्नृत्यन्तीषु प्रकामं विबुधपुरचकोरेक्षणासु प्रमोदात् ।
वीणाचुञ्चौ विपञ्चीं मुनिकुलतिलके वादयत्यादिदेवः
साकं योगीन्द्रवृन्दैरभजत सरयूतीरमारूढतेजाः ॥५२॥

वेलाविहीनमहिमामहितामुवाह
श्रीरामतामपघनेन परं तदानीम् ।
आरादपास्य विधृतां मनुजत्वमुद्रां
नारायणत्वमभजत्तरसा तदात्मा ॥ ५३ ॥

मनुजाशरवानरानुपेता-
ननुगन्तुं धृतकौतुकानशेषान् ।

सरयूजलमज्जनाय देवः
स्वयमव्याकुलधीरथादिदेश ॥ ५४ ॥

अहमहमिकया ततः सरय्वा-
मभिपततां च निमज्जतां जनानाम् ।
जय जय रघुनाथ रामचन्द्रे-
त्यमलतरैर्वचनैरपूरि विश्वम् ॥ ५५ ॥

ये ये निमग्नाः सलिले सरय्वा-
स्ते ते परित्यज्य पुराणदेहान् ।
विमानभाजो धृतनूतनाङ्गा
विरेजिरे विष्णुपदं व्रजन्तः ॥ ५६ ॥

निशिचरकपिमर्त्या हन्त तिष्ठन्तु दूरे
मशकशशकदंशाद्याश्च मग्नाः सरय्वाम् ।
तनुमधिकमनोज्ञां धारयन्तो विरेजुः
कनकमयविमाने कान्तितापिञ्छिताशाः ।

चित्रं तदा तत्र निमग्नगात्रा-
नत्यन्तनिन्द्यानपि सत्वसंघान् ।
सद्यः समासादितदिव्यरूपान्[1]
वृत्रारिमुख्या विबुधा विनेमुः ॥ ५८ ॥

---

१. विष्णुरूपान्

श्रीरामचन्द्रमृदुहासमये पुरस्तात्
दूरं निमज्य सलिले सुरनिम्नगायाः ।
आनम्य चामुमधिपोऽथ वलीमुखाना-
मामोदवानवततार नदीमुदाराम् ॥ ५९ ॥

निमग्ने सुग्रीवे किमपि विमलं धाम सलिला-
दुदस्थादुन्मीलन्नवकनकपाथोजसहजम् ।
तदप्यूर्ध्वं गच्छत्प्रचुरकुतुके पश्यति जने
जगन्मूर्तौ लेभे सवितरि परब्रह्मणि लयम् ॥

सरयूसलिलाप्लुतास्तदानी-
मपरे चापि नलादयः कपीन्द्राः ।
विकृतिं कपितामपास्य सद्यः
प्रकृतिं प्रापुरमर्त्यतामशेषाः ॥ ६१ ॥

ततः समालोक्य समीपवर्तिनं
कृताञ्जलिं राक्षसराजमादरात् ।
उवाच रामो वचनं मनोहरं
विभीषणं तं विनयैकभूषणम् ॥ ६२ ॥

लङ्कापते शृणु सखे वचनं मदीय-
मङ्गीकुरुष्व च विहाय विचारलेशम् ।
भक्तिं परां मयि वहन् विहितानि कुर्वन्
पृथ्वीतले वस चिराय निराकुलात्मा ॥ ६३ ॥

आयाते त्वयि सांप्रतं सह मया संत्यज्य धात्रीं दिवं
नीचा जातिरियं करिष्यति जगत्पीडां निशाचारिणाम् ।
धृत्वा मर्त्यतनुं ततः सुविहितं कर्माधुना यन्मया
मिथ्या सर्वमिदं भविष्यति सखे शुण्डालशौचोपमम् ॥

खेदं परित्यज चिराय भजस्व मोदं
साधीयसी चरमकालगतिस्तवापि ।
गच्छाधुनैव नगरीं परिपाहि लोकान्
मच्छासनं कुरु सखे विचिकित्सयालम् ॥

इत्थं प्रस्थाप्य वचसा भक्तं नक्तंचराधिपम् ।
भूयो वक्तुं जगन्नाथो वायुसूनुं प्रचक्रमे ॥ ६६ ॥

आहूय नेत्रकलया विहितप्रणाम-
माश्लिष्य गाढमुरसा मिषतां जनानाम् ।
तत्सौहृदस्मरणविक्लवितान्तरात्मा
हर्षाश्रुपूर्णनयनो हनुमन्तमूचे ॥ ६७ ॥

चिदादित्योन्मेषादपगततमःस्तोममधुना
मुहुः साम्यं धत्ते मम सकलभूतेष्वपि मनः ।
तथापि प्रोन्मीलत्प्रणयभरवात्सल्यविवशं
त्वयि श्रीमन्नेतत् कपितिलक भूयोऽपि वलते ॥६८॥

सुग्रीवेण समागमः सुघटितो वाली च नीतः क्षयं
　वैदेही विचिता पुनर्विरचितः सेतुश्च वारांनिधौ ।
भूयः सङ्गरसीम्नि सानुजसुहृत्पुत्रो हतो रावणः
　कान्ता सा च समर्पिता मम करे वीर त्वयैवामुना ॥

अप्येकस्योपकारस्य विहितस्य मम त्वया ।
अहं प्रतिविधौ नालं बहूनामिति किं पुनः ॥

उपकृतिमपरेषां कुर्वते हन्त सर्वे
　हृदि दृढमभिसंधायात्मनः कंचिदर्थम् ।
सततमपरकार्याण्यात्मकार्यानपेक्षं
　पवनसुत विधातुं दुर्लभास्त्वत्समानाः ॥७१॥

प्राणाः समस्तजगतां पवनः पिता ते
　चक्षुस्तथैव भगवान् गुरुरंशुमाली ।
इत्थं वदन्ति किल वेदविदो महान्तो
　मन्ये द्वयं पुनरिदं मम तु त्वमेव ॥ ७२ ॥

अद्यापि नैव हृदयादपयाति मोदा-
　दुद्धूतवालनिवहैः सह वानरौघैः ।
चूडामणिं प्रियतमाप्रहितं कराभ्या-
　माबिभ्रतस्तव तदागमनं तदानीम् ॥ ७३ ॥

चरित्रं मदीयं मनःश्रोत्रहृद्यं
लवित्रं समेषां महापातकानाम् ।
पवित्रं परं यावदेतत्समिन्धे
धरित्रीतले तावदास्तां गुणाब्धे ॥ ७४ ॥

इत्थं प्रसादमधुरं प्रवदन् पदान्ते
भूयोऽपि तं निपतितं पवमानसूनुम् ।
उत्थाप्य मूर्ध्नि विनयावनते तदीये
विन्यस्य दक्षिणकराम्बुजमेवमूचे ॥ ७५ ॥

भद्रमस्तु तव याहि मारुते
पारियात्रमवनीधरोत्तमम् ।
तत्र मामनुविचिन्तयन्वसन्
लप्स्यसे मनसि निर्वृतिं पराम् ॥ ७६ ॥

उद्यद्भक्तिभरावनम्रवदनं बद्धाञ्जलिं मारुतिं
प्रस्थाप्य प्रचुरप्रसादसरसैरित्थं विलासैर्गिराम् ।
सानन्दोऽवततार सोऽथ सरयूमाम्नायपाथोजनी[1]-
सौरभ्यं सहजावलम्बितकराम्भोजो रघुग्रामणीः ॥

अमरैरतिमात्रकौतुक-
प्रसरावेशवशंवदाशयैः ।

१. पाथोजिनी

नितरामभवत्समागतै-
निबिरीसा सरयूतटी तदा ॥ ७८ ॥

सहागतं तत्र पुरन्दरेण
सहोदरं संस्पृहणीयशीलम् ।
विलोकयन्नेत्य कुतूहलेन
विलोलचेताः परिषस्वजे तम् ॥ ७९ ॥

रोमाञ्चभाजा सुदृढोपगूढो
रामेण सौमित्रिरुदूढमोदः ।
[1]प्रागेव हित्वा मनुजत्वमुद्रां
भोगीन्द्रभूयं भजति स्म सोऽयम् ॥ ८० ॥

कर्पूरश्रीसपत्नीं दिशि दिशि विकिरन् कान्तिपीयूषधारा-
मुन्मीलन्मूर्धरत्नस्फुरणशबलितां व्योमवीथीं वितन्वन् ।
बिभ्रच्छुभ्रातपत्रश्रियमुपरिधृतैरुज्ज्वलानां फणानां
बृन्दैर्विश्वैकवन्द्यं भुजगपरिबृढो रामचन्द्रं सिषेवे ॥८१॥

आकर्षन् पक्षपालीपवनविचलितानम्बरे वारिवाहा-
नालोलद्वीचिमालानपि च विरचयन्नम्बुराशीनशेषान् ।
आतन्वन् दिग्विभागानरुणतनुरुचा पद्मरागप्रकाशा-
नारादभ्येत्य भक्त्या तदनु निजपतिं वैनतेयो ववन्दे ॥

---

१. द्रागेव

जात्याप्यमित्रेण फणीश्वरेण
मैत्रीं वहन्नुद्धृतभक्तिभूमा ।
विभोरतिष्ठत् पदयोरुपान्ते
विनीतिशाली विनतात्मजन्मा ॥ ८३ ॥

अथानवद्यामवनीतनूजा-
मुपायनीकृत्य रघूत्तमाय ।
ननाम तत्पादसरोजमूले
प्रमार्ष्टुकामेव निजापराधम् ॥ ८४ ॥

दृष्ट्वा पुरस्तात्सहसैव कान्तां
हृष्टान्तरोऽभूदधिपो रघूणाम् ।
वृष्टिं व्यपेताम्बुधरामवाप्य
क्लिष्टो निदाघेन यथा चकोरः ॥ ८५ ॥

अभिव्यक्ताकूतैरतिविनयवैयात्यमधुरै-
रपाङ्गैरालोलैः सपदि परिरम्भं विदधतीम् ।
अमन्दानन्दोद्यन्मृदुलहसितालंकृतमुखी-
मसौ पश्यन् कान्तामभजत कृती कामपि मुदम् ॥

१. अधिकः श्लोकः—
इयमप्यपरा भवेद्ध्रुवं परिरब्धुं सहसा कुमारवत् ।
मनसेति विचिन्त्य सोऽन्वभूद्दयिताकान्तिनिरीक्षणोत्सवम् ॥

कबरीभारकान्तिश्रीकबलीभूतकालिकाम् ।
अलिकान्तपरिभ्राजदलिकान्तालकावलीम् ॥८७॥

फालकान्तिपराभूतबालपीयूषरोचिषम् ।
विलसन्नवकस्तूरीतिलकालंकृतालिकाम् ॥ ८८ ॥

चिल्लीचातुर्यनिर्लूनमल्लीशरशरासनाम् ।
[1]आलोलनयनोन्मीलदानङ्गरसमाधुरीम् ॥ ८९ ॥

वि[2]लसन्नासिकाधूततिलसूनसुखासिकाम् ।
कपोलदर्पणामूर्च्छद्विलोलमणिकुण्डलाम् ॥ ९० ॥

मधुराधरकान्तिश्रीविधुरीभूतविद्रुमाम् ।
कुन्दसूनमनोहारिमन्दहासविभूषणाम् ॥ ९१ ॥

कण्ठकान्तिपराभूतकम्बुबिम्बोकडम्बराम् ।
भुजसौन्दर्यविजितभुजगीभोगविभ्रमाम् ॥ ९२ ॥

[3]मुक्ताहारलताशोभिवृत्तापीनपयोधराम् ।
कुचकुम्भभराभुग्नमृदु[4]मध्यमनोहराम् ॥ ९३ ॥

१ नीलतामरसाकारलोलचारुविलोचनाम् ।

२. नासिकारुचिनिर्धूतनालीकनवकर्णिकाम् :

३. हारकान्तिपरीरम्भचारुपीनपयोधराम् । ४. मध्यमवल्लरीं

पृथुश्रोणीसमारब्धरथश्रोणीविडम्बनाम् ।
मणिकाञ्चीलतादामधृतनीवीनिबन्धनाम् ॥ ९४ ॥

परिधानान्तरालक्ष्यपरिपीनोरुतोरणाम् ।
पदपङ्कजनालाभमृदुजङ्घामनोहराम् ॥ ९५ ॥

चरणाम्भोजसंसक्तविरणन्मणिनूपुराम् ।
तुङ्गरक्तनखश्रेणीभङ्गिश्रृङ्गारिताङ्गुलिम् ॥ ९६ ॥

कामदेवोपनिषदां देवतामागतामिव
शृङ्गाररसचातुर्यलक्ष्मीं मूर्तिमतीमिव ॥ ९७ ॥

लोकमाधुर्यसंपत्तियोगसंघटितामिव ।
अतिपेलवसौभाग्यलतिकामञ्जरीमिव ॥ ९८ ॥

हरनिर्दग्धपञ्चेषुमृतसंजीविनीमिव ।
उल्लसन्नवसौन्दर्यकन्दलीसुषमामिव ॥ ९९ ॥

विलोकयन् प्रियां प्रेम्णा विलोचनसुधाझरीम् ।
परमानन्दपाथोधौ निममज्ज रघूत्तमः ॥ १०० ॥

अधिकमधुरगात्रीमन्तिके वल्लभां तां
कुतुकतरलनेत्रां पश्यतो रावणारेः ।

शशधरकिरणालीचुम्बितेनान्तरङ्गं
शशिमणिशकलेन प्राप साम्यं क्षणेन ॥ १०१॥

रमाभूयं याता तदनु मिथिलाधीशतनया
समारूढा पत्युः सकुतुकमुरोधाम शुशुभे ।
चिराकाङ्क्षालब्धप्रियतमसमालिङ्गनसुख-
प्ररोहद्रोमाञ्चप्रकररमणीयाङ्गलतिका ॥१०२॥

दरतां भरतस्तावदरितामरिहा तथा ।
उभौ विरेजतुः प्राप्य विभोः करसरोजयोः ॥ १०३ ।

मर्त्यभावमवलम्ब्य सीदता-
मित्थमुत्तमयशा दिवौकसाम् ।
आधिभारमपनुद्य लीलया
माधवः स्वमहिमानमानशे ॥ १०४ ॥

मणिकिरीटमनोज्ञरुचिच्छटा-
च्छुरितकुन्तलसन्ततिबन्धुरम् ।
मकरकुण्डलचण्डकरप्रभा-
परिचयस्फुरदाननपङ्कजम् ॥ १०५ ॥

अलसनीलविशालविलोचन-
स्फुरदुदारविलासकृपारसम् ।

मृदुलहासमनोहरचन्द्रिका-
विदलिताश्रितलोकपरिश्रमम् ॥ १०६ ॥

दरसराजरथाङ्गगदाल्लस-
त्करसरोजचतुष्कविराजितम् ।
गलविभूषणकौस्तुभदीधिति-
प्रसरपिञ्जरिताखिलदिङ्मुखम् ॥ १०७ ॥

तुलसिकादलदामपरम्परा-
विलसितायतचारुभुजान्तरम् ।
पृथुलचारुनितम्बपारस्फुर-
न्मृदुलपीतदुकूलमनोहरम् ॥ १०८ ॥

घटितनिर्मलरम्यमहोपल-
स्फुटमहोभरहाटकमेखलम् ।
मदविशृङ्खलदन्तिकरद्युति-
प्रतिभटोरुयुगाधिकसुन्दरम् ॥ १०९ ॥

सुरकिरीटमणीकिरणोल्लस-
च्चरणकान्तिजितारुणपङ्कजम्।
वपुरभूत्सहसैव रमापते-
रिति जगन्नयनौघरसायनम् ॥ ११० ॥

उद्यत्कौतूहलायां परिषदि मुनिगन्धर्वबृन्दारकाणा-
मुत्तुङ्गे जृम्भमाणे वियति जयगिरा मेदुरे तूर्यघोषे ।
पादान्ते[1] नम्रमुच्चैरुरगरिपुमुपारुह्य साक्षान्मुकुन्दो
वेदान्तावेद्यधामा दशवदनरिपुः प्राप वैकुण्ठलोकम् ॥
॥ १११ ॥

इति[2] उत्तररामचरितकाव्ये पञ्चमः सर्गः ॥

समाप्तश्चायं ग्रन्थः ॥

१. पादान्ते गंननाङ्गं पतगकुलमहाराजमारुह्य साक्षात्
वेदान्तावेद्यधामा नरकविमथनो नाकलोकं प्रपेदे ॥
२. इत्युत्तरराघवीये पञ्चमः सर्गः ।

# ॥ उत्तररामचरितकाव्य-श्लोकसूची ॥